नमः श्रीशैलनाथाय कुन्तीनगरजन्मने।
प्रसादलब्धपरमप्राप्यकैङ्कर्यशालिने ॥१७॥

॥ श्री वरवरमुनि स्वामी जी की तनया॥

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम्।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥१८॥

॥ श्री प्रतिवादिळभयङ्कर स्वामी जी की तनया॥

वेदान्तदेशिककटाक्षविवृद्धबोधं,
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं,
भक्त्या भजामि परवादिभयंकरार्यम् ॥१९॥

॥ श्री अनन्ताचार्य स्वामी जी की तनया॥

श्रीमद्वादिभयंकरार्यतनयं तत्पादपद्माश्रित-
स्वान्तं कान्तवराभिधानयमिनां कारुण्यसद्भाजनम्।
श्रीवत्सान्वयभूषणं श्रितनिधिं वात्सल्यरत्नाकरं-
वन्दे श्रीमदनन्तदेशिकवरं वेदान्तविद्यानिधिम् ॥२०॥

॥ श्री रामानुचार्य स्वामी जी की तनया॥

श्रीवादिभयकृत्पौत्रं तत्पादाब्जैकधारकम्।
अनन्तार्यगुरोः पुत्रं रामानुजगुरुं भजे ॥२१॥

॥ श्री सौम्यवराचार्य स्वामी जी की तनया॥

यत्तातत्समभूदुदारमहिमानन्तार्यवर्यस्सतां,
सम्पूज्यः प्रतिवादिभीकरगुरुर्यत्तातततो महान्।
यन्नाथः परमः पुमान्नतनिधिः श्रीवेङ्कटाधीश्वरः,
सेवे सौम्यवराभिधं गुरुवरं तं भास्करं विद्यया ॥२२॥

॥ श्री वरदनारायणाचार्य स्वामी जी की तनया॥

विमतवादीभसिंहार्यवंशोद्भवं,

रुचिरजामातृसुनुं महान्तं वरम्।
सुगुणरामानुजार्याङ्घ्रिपद्माश्रितं,
वरदनारायणं सद्गुरुं संश्रये॥२३॥

॥ श्री वेदान्तदेशिक स्वामी जी की तनया॥

वरदार्यगुरोः पुत्रं तत्पादाब्जैकधारकम्।
ज्ञानभक्त्यादिजलधिं वन्दे वेदान्तदेशिकम्॥२४॥

॥ श्री सौम्य वरदाचार्य स्वामी जी की तनया॥

वेदान्ताचार्यतनयं वेदान्तद्वयपारगम्।
श्रीसौम्यवरदाचार्यं श्रेयसां निधिमाश्रये॥२५॥

॥ श्री प्रणतार्तिहराचार्य स्वामी जी की तनया॥

निगमान्तगुरोः पुत्रं वात्सान्वयविभूषणम्।
वरदार्य कृपापात्रं प्रणतार्तिहरं भजे॥२६॥

॥ श्री वेदान्तदेशिक स्वामी जी की तनया॥

प्रणतार्तिहराचार्यतनयं विनयोज्ज्वलम्।
रम्योपयन्तृसच्छात्रं वन्दे वेदान्तदेशिकम्॥२७॥

॥ श्री वरदाचार्य स्वामी जी की तनया॥

वेदान्तार्यतनूभवं वरदगुर्वान्तागमान्तद्वयं-
श्रीवत्सान्वयहारनायकमणिं शिष्यौघसंजीवनम्।
शांतिक्षांतिविरक्तिभक्तिविमलज्ञानक्रियाभास्वरं
वन्देऽहं वरदार्यदेशिकवरं वात्सन्यवारांनिधिम्॥२८॥

॥ श्री वैङ्कटाचार्य स्वामी जी की तनया॥

वरदार्यगुरोः पुत्रं तत्पादाब्जैकधारकम्।
वेदान्तद्वयनिष्णातं वेङ्कटार्यमहं भजे॥२९॥

॥ श्री रङ्गदेशिक स्वामी जी की तनया॥

**वेङ्कटार्यगुरोः पुत्रं तत्पादाब्जसमाश्रयम्।**
**वेदान्तद्वयसारज्ञं वन्दे श्रीरंगदेशिकम्॥३०॥**

॥ श्री श्रीनिवासाचार्य स्वामी जी की तनया॥

**श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं,**
**श्रीरंगराजतनयं रमणीयशीलम्।**
**तस्मादवाप्तनिगमान्तयुगार्थसारं,**
**श्रीश्रीनिवासगुरुशेखरमाश्रयामः॥३१॥**

॥ श्री अनन्ताचार्य स्वामी जी की तनया॥

**श्रीवादिभकृत्कुलवारिराशि-**
**निशाधिनाथं कलयामि नित्यम्।**
**श्रीश्रीनिवासार्यपदाब्जभृङ्गम्,**
**अनन्तवर्यं तनयं तदीयम्॥३२॥**

॥ श्री श्रीनिवासाचार्य स्वामी जी की तनया॥

**नित्यं त्वनन्तगुरुवर्यतनूजरत्नं,**
**श्रीश्रीनिवासपदपङ्कजचञ्चरीकम्।**
**श्रीवेङ्कटार्यगुरुसाधितत्वबोधं,**
**श्रीश्रीनिवासगुरुवर्यमहं प्रपद्ये॥३३॥**

॥ श्री अनन्ताचार्य स्वामी जी की तनया॥

**श्रीवत्सवंशाम्बुधिपूर्णचन्द्रं,**
**श्रीश्रीनिवासार्यगुरोस्तनूजम्।**
**तत्प्राप्तवेदान्तयुगार्थसार**
**मनन्तवर्यं प्रणमामि नित्यम्॥३४॥**

॥ श्री वेदान्ताचार्य स्वामी जी की तनया॥

**वन्दे श्रीमदनन्तदेशिकदयाप्राप्तागमान्तद्वयं,**
**श्रीवाग्भूषणभावबोधतदनुष्ठानादिदत्तादरम्।**

श्रीवत्सान्वयदुग्धवारिधिविधुं शान्त्यादिरत्नाकरं,
स्वांघ्रिद्वन्द्वसमाश्रितातिसुलभं वेदान्तवर्याभिधम् ॥१ ॥

॥ श्री निवासाचार्य स्वामी जी की तनया ॥

वेदान्तयुग्मनिपुणं परवादिभीकृद,
वेदान्तनामगुरुपुङ्गवपादभक्तम्।
श्रीश्रीनिवासगुरुमाश्रितपारिजातं,
ध्यायाम्यनन्तगुरुवर्यपदेऽभिषिक्तम् ॥२ ॥

॥ श्री रामानुजाचार्य स्वामी जी की तनया ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं
श्रीश्रीनिवासगुरुवर्यकृपैकपात्रम्।
शान्त्यादिसद्गुणनिधिं परमार्थनिष्ठं
रामानुजार्यमनिशं हृदि चिन्तयामि ॥३ ॥

॥ श्री कृष्णदेशिक स्वामी जी की तनया ॥

श्रीवत्सवंशलकशोदधिपूर्णचन्द्रं
श्रीश्रीनिवासगुरुवर्यकृपैकपात्रम्।
रामानुजार्यतनयं विनयाभिरामं-
श्रीकृष्णदेशिकमहं प्रणतोऽस्मि नित्यम् ॥४ ॥

॥ श्री अनन्तसूरि स्वामी जी की तनया ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं
श्रीकृष्णसूरिपदपङ्कजभृङ्गराजम् ॥
श्रीरङ्गवेङ्कटगुरुत्तमलब्धबोधं-
भक्त्या भजामि गुरुवर्यमनन्तसूरिम् ॥५ ॥

॥ श्री श्रीपति स्वामी जी की तनया ॥

श्रीवादिभीकरगुरुत्तमवंशसिन्धु-
शीतांश्वनन्तगुरुवर्य्यपदाब्जभृङ्गम्।

श्रीगौतमान्वयपयोनिधिपूर्णचन्द्रं
श्रीश्रीपतिं गुरुवरं शरणं प्रपद्ये ॥३५॥

॥ श्री अच्युत स्वामी जी की तनया ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं
श्रीपत्यभिख्यगुरुवर्यपदाब्जभृङ्गम्।
शान्त्यादिसद्गुणनिधिंपरमार्थनिष्ठं
नौम्यच्युतं गुरुवरं शिरसा सदाऽहम् ॥३६॥

॥ श्री विष्णुचित्त स्वामी जी की तनया ॥

अच्युतार्यपदाम्भोजचञ्चरीकायितान्तरम्।
कान्यकुब्जकुलोत्पन्नं विष्णुचित्तं गुरुम्भजे ॥३७॥

॥ श्री साधुशरण स्वामी जी की तनया ॥

श्रीकान्यकुब्जकुलवारिधिपूर्णचन्द्रं श्रीविष्णुचित्तगुरुवर्य-
पदाब्जभृङ्गम्। ज्ञानादिसद्गुणगणौघमहाम्बुराशिं ध्यायामि
साधुशरणाख्यगुरुं सदाऽहम् ॥३८॥

॥ श्री रामकृष्ण स्वामी जी की तनया ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रमार्यस्य साधुशरणस्य कृपैकपात्रम्।
ज्ञानादिसद्गुणनिधिं करुणानिधानं श्रीरामकृष्णगुरुवर्यमहं प्रपद्ये ॥३९॥

॥ श्री त्रिदण्डिस्वामी जी की तनया ॥

काषायं यज्ञसूत्रं शुचिवपुषि तथा चोर्ध्वपुण्ड्रं च भाले,
यस्यास्ते दक्षहस्ते कलिकुमतिगिरीन्द्रेन्द्रवज्रं त्रिदण्डम्।
संसाराग्निप्रशान्त्यै भृतजलममलं दारुपात्रं पवित्रम्,
श्रीविष्वक्सेनसूरेः पदकमलयुगं श्रेयसे संश्रयामि ॥४०॥

* इति गुरुपरम्परा सम्पूर्णा *

## ॥ अथ श्रीत्रिदण्डिस्वामिनां प्रपत्ति प्रारम्भः ॥

श्रीशाङ्घ्रिपङ्कजसुधामनु-सानुरागं,
काषायितं च सुमनोऽखिलसद्रसेभ्यः।
सुव्यञ्जयद्विधृतवस्त्रकषायविष्वक्-
सेनेशयोगिचरणौ शरणं प्रपद्ये ॥१ ॥
भ्राजल्ललाटवरसद्रचितोर्ध्वपुण्ड्रः,
शुभ्रोपवीतसुशिखायुतसुत्रिदण्डः।
यो वादिभीतिकृदनन्तगुरोः सुशिष्यः,
सेनेशयोगिचरणौ शरणं प्रपद्ये ॥२ ॥
सिद्धाश्रमे चरितनामवनेऽभिषिक्तः,
यः श्रीपतीतिविदिते महिते सुपीठे।
श्रीरामकृष्णगुरुवर्यपदाब्जभृङ्ग-
सेनेशयोगिचरणौ शरणं प्रपद्ये ॥३ ॥
यौ योजनस्थितसुगाङ्गजलप्रदेशा-
वास्यार्णवश्रुतिविदग्रजवंशचन्द्रौ।
मंदाकिनीसरयुतीर्थसुयज्ञकारि-
सेनेशयोगिचरणौ शरणं प्रपद्ये ॥४ ॥
गीर्वाणवाग्विभववर्द्धनदक्षविद्या-
पीठेषु संख्यवरजन्मविधायकौ यौ।
श्रीवेदमार्गपरिपुष्टिविधातृविष्वक्
सेनेशयोगिचरणौ शरणं प्रपद्ये ॥५ ॥
यो वा पयोव्रतमुदारतरं गृहीत्वा अष्टोत्तरप्रशतदिव्य-सुदेशसृष्टेः।
नारायणस्य वरमङ्गलकारिविष्वक्सेनेशयोगिचरणौ शरणं प्रपद्ये ॥६ ॥

नारायणेन रमया प्रथितं प्रपत्तिधर्मं विवर्धितमुरीकृतविग्रहौ यौ।
नारायणात्पितुरथेन्दिरया सुमात्रा सेनेशयोगिचरणौ शरणं प्रपद्ये ॥७॥

श्रीभाष्यकारवरवंशमहाप्रदीपौ लोकार्यसूक्तिवरवर्षणवारिवाहौ।
श्रीमच्छठारिचरणाम्बुजराजहंससेनेशयोगिचरणौ शरणं प्रपद्ये ॥८॥

श्रीस्तोत्ररत्नवरभावप्रकाशकारश्चिन्तामणिंवचनभूषणकेऽर्पको यः।
यो वार्थपञ्चकसुमर्मविवोधकारीसेनेशयोगिचरणौ शरणं प्रपद्ये ॥९॥

चूडामणिं च विमलां सुविरच्य वार्तामालाविभूषणकरो सहितोमहद्भिः।
अष्टाङ्गयोगसुसमाधिविधिज्ञविष्वक्सेनेशयोगिचरणौ शरणं प्रपद्ये ॥१०॥

अर्चासमर्चनपुरस्सरवेदमार्गविप्लावनव्रतिगणस्य शिरः सुवज्रौ।
पाषण्डिदन्तिकटभेदनसिंहविष्वक्सेनेशयोगिचरणौ शरणं प्रपद्ये ॥११॥

॥ इति प्रपत्तिसमाप्तिः ॥

## ॥ अथ श्रीत्रिदण्डिस्वामिनां मंगलाशासनप्रारम्भः ॥

मंगलं यतिवर्य्याय सेनेशप्रतिमूर्त्तये।
वादिभीकरवंशाय विष्वक्सेनार्ययोगिने ॥१॥

मंगलं रामकृष्णार्यकृपाप्तगुणराशये।
श्रीशाङ्घ्र्यब्जमधुज्ञाय विष्वक्सेनार्ययोगिने ॥२॥

मंगलं वादिभीकरानन्तार्यकरुणावशात्।
लब्धसर्वार्थशास्त्राय विष्वक्सेनार्ययोगिने ॥३॥

मंगलं गुरुवर्य्याय श्रीसनातनवैदिकम्।
धर्मंलोप्तुं प्रवृत्तानां शिरोवज्रवराङ्घ्रये ॥४॥

यज्ञैः सुविततैर्लोके देवानां मोदकारिणे।
विष्वक्सेनयतीन्द्राय नित्यश्रीर्नित्यमंगलम् ॥५॥

योगसिध्याद्भुतैः कार्यैर्लोकमंगलकारिणे।
विष्वक्सेनाय मुनये नित्यश्रीर्नित्यमंगलम् ॥६॥

रामानुजाचार्यकरुणापूर्णपात्राय योगिने।
विष्वक्सेनाय मुनये नित्यश्रीर्नित्यमंगलम् ॥७॥

पयोव्रतपवित्राय श्रीशमंगलकारिणे।
विष्वक्सेनाय मुनये नित्यश्रीर्नित्यमङ्गलम् ॥८॥

नित्यं सुविहिताचार प्रतिमाधवमूर्तये।
विष्वक्सेनयतीन्द्राय नित्यश्रीर्नित्यमङ्गलम् ॥९ ॥
व्याख्यानैः शुभलेखैश्च श्रीभाष्यार्थप्रवर्षिणे।
विष्वक्सेनार्यमुनये नित्यश्रीर्नित्यमङ्गलीम् ॥१० ॥
लक्ष्मीप्रपन्नरचितस्तुतिपुष्पार्चिताङ्घ्रये।
विष्वक्सेनाय मुनये नित्यश्रीर्नित्यमङ्गलम् ॥११ ॥
॥ इति गङ्गलाशासनं समाप्तम् ॥

## ॥ अथ श्रीत्रिदण्डिस्वामिनां सुप्रभातप्रारम्भः ॥

श्रीरामकृष्णगुरुपादसरोजभृङ्ग श्रीवादिभीतिकृदनन्तगुरुप्रमोद।
रामानुजार्यमुखपङ्कजसूर्यविष्वक्सेनेशयोगिभगवँस्तव सुप्रभातम् ॥१ ॥
श्रीमत्सनातनसुनीतिविवर्द्धनाय वादान् विधूयकुमतिव्रजसुप्रक्लृप्तान्।
उत्तिष्ठ जागृहि यतीन्द्रधुरीण विष्वक्सेनेशयोगिभगवँस्तव सुप्रभातम् ॥२ ॥
ग्रन्थान् द्विचन्द्रबहुलाँल्लिखितुंप्रभाते, लोकान्समान्समुपदेष्टुमतिप्रशस्तान्।
श्रीवेदमार्गमतिशस्ततरं विधातुम्, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥३ ॥
लोकार्यसूक्तवरपंकंजभास्करार्य, श्रीयामुनार्यवरसूक्तिविकासकार।
आचार्यसन्ततिसुवाक्यसदर्थकार, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥४ ॥
आराधनं रचयितुं कमलासखस्य, सम्यक्समाधिविधिना यतिपुंगवार्य।
उत्तिष्ठ योगपथवैभवबोधकारिन्, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥५ ॥
कौपीनयुग्मकटिवस्त्रकण्मडलूँश्च, श्रीदन्तकाष्ठमपि हे यतिराजवर्य्य।
पाणौ निधाय निवसन्ति विशुद्धगात्राः, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥६ ॥
शिष्यो ह्ययं सुविनतङः परिगृह्य सौम्यः, श्रीपादुके तवपदाब्जयुगे प्रयोक्तुम्।
द्वारि स्थितिं रचयते विनतार्तिहारिन्, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥७ ॥
स्नातुं सुजह्नुतनयासलिलेषु शिष्यैः, विज्ञैस्तथा यतिवरैर्वरवैष्णवेन्द्रैः।
एकान्तिभिः परमभागवतैर्निषेव्य, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥८ ॥
ब्राह्मे विबुध्य सुबुधाः गुरुसन्ततिं स्वां, सम्यक्प्रणम्य हरये नम इत्युदारम्।
उच्चार्य ते सुविमलं जयमुद्गिरन्ति, सेनेशयोगिभगवँस्तव सुप्रभातम् ॥९ ॥
श्रीकान्तधामनिलयो य इहास्ति देवः श्रीमंगलार्तिकमिषेण विबोधमाप्ता।
तद्दृष्टिपातसुखमुत्तममाप्तुमञ्जः, उत्तिष्ठ हे यतिगुरो तव सुप्रभातम् ॥१० ॥

प्रातः पठन्ति परितः परमप्रपन्ना, अष्टाक्षरप्रमुखमन्त्रगणान्सुदिव्यान्।
श्रीवैष्णवास्तव पदाब्जनिविष्टभाराः, सेनेशयोगिभगवँस्तव सुप्रभातम्॥११॥

॥इति सुप्रभातं सम्पूर्णम्॥

## ॥ अथ श्रीत्रिदण्डिस्वामिनां प्रणवादिनमोऽन्ता नामावलिः ॥

१. ओं विष्वक्सेनाय नमः
२. ओं यतिश्रेष्ठाय नमः
३. ओं श्रीवैष्णवकुलांशुमते नमः
४. ओं नारायणात्मजश्रेष्ठाय नमः
५. ओं इन्दिरानन्दवर्द्धनाय नमः
६. ओं पयोव्रतिने नमः
७. ओं समाधिस्थाय नमः
८. ओं काषायाम्बरधारकाय नमः
९. ओं जितेन्द्रियाय नमः
१०. ओं सुवाग्मिने नमः
११. ओं चतुर्वेदिकुलविधवे नमः
१२. ओं श्रीपतिपीठषष्ठेशाय नमः
१३. ओं कारुषदेशसम्भवाय नमः
१४. ओं शताधिकमखाधीशाय नमः
१५. ओं त्रिदण्डिस्वामिने नमः
१६. ओं जगद्गुरवे नमः
१७. ओं शठकोपकृपातृप्ताय नमः
१८. ओं अनन्तार्यचरणाश्रिताय नमः
१९. ओं श्रीसम्प्रदायधुर्वोढ्रे नमः
२०. ओं श्रीरामकृष्णसुसेवकाय नमः
२१. ओं श्रीरंगेशसुभक्ताय नमः
२२. ओं वेणुगोपालपूजकाय नमः
२३. ओं श्रीकृष्णार्यप्रियभ्रात्रे नमः

२४. ओं धर्मज्ञाय नमः
२५. ओं तत्त्वदर्शकाय नमः
२६. ओं रामानुजकृपापात्राय नमः
२७. ओं कलिकालुष्यहारकाय नमः
२८. ओं गीतार्थबोधकाय नमः
२९. ओं चरमार्थप्रदायकाय नमः
३०. ओं काञ्चीपीठेन्द्रसंलब्धछत्रचामरभूषिताय नमः
३१. ओं मोहमय्यां तुरीयाश्रमधारकाय नमः
३२. ओं महौजसे नमः
३३. ओं त्रिकालज्ञाय नमः
३४. ओं सन्मनोरथपूरकाय नमः
३५. ओं प्रतिवादिभयंकर्त्रे नमः
३६. ओं भाष्यार्थसुकारकाय नमः
३७. ओं श्रोत्रियब्रह्मसन्निष्ठाय नमः
३८. ओं नेत्यादिषट्क्रियाकराय नमः
३९. ओं सिद्धेश्वराय नामः
४०. ओं सुशास्त्रज्ञाय नमः
४१. ओं भक्तकञ्जदिवाकराय नमः
४२. ओं पद्मासनसमासीनाय नमः
४३. ओं ब्रह्मराक्षसमोचकाय नमः
४४. ओं गंगाप्रवाहभेत्रे नमः
४५. ओं सेव्याय नमः
४६. ओं सन्मार्गदर्शकाय नमः
४७. ओं यतीन्द्रपूजिताय नमः
४८. ओं पञ्चसंस्कारकाय नमः
४९. ओं आर्त्तजनपरित्रात्रे नमः
५०. ओं वैकुण्ठसेनाधिपतये नमः
५१. ओं सुदर्शनोदयनारायणवन्दिताय नमः
५२. ओं सिद्धाश्रमेशलीनाय नमः
५३. ओं चतुर्भुजहर्षदाय नमः
५४. ओं वार्षभश्रुतिमार्त्तण्डाय नमः

५५. ओं पर्णशालाधिवासकाय नमः
५६. ओं विष्णुचित्तप्रतिष्ठात्रे नमः
५७. ओं सर्वतन्त्रस्वतंत्राय नमः
५८. ओं लक्षाधिकसुशिष्याढ्याय नमः
५९. ओं लोकार्योक्तिविकासकाय नमः
६०. ओं ईशादिदशोपनिषद्भाष्यकर्त्रे नमः
६१. ओं अमोघवरदात्रे नमः
६२. ओं यामुनार्योक्तिवर्द्धकाय नमः
६३. ओं त्रिदण्डिदेवग्रन्थमालानिर्मात्रे नमः
६४. ओं स्रोतस्विनीतटावासिने नमः
६५. ओं विशिष्टाद्वैतवर्द्धकाय नमः
६६. ओं अद्वैतमतविच्छेत्रे नमः
६७. ओं वेदमार्गसुपोषकाय नमः
६८. ओं अखिलार्यावर्त्तपदचारिणे नमः
६९. ओं सुधीप्रियाय नमः
७०. ओं शन्तवपुषे नमः
७१. ओं तेजस्विने नमः
७२. ओं शोकतापविनाशकाय नमः
७३. ओं सत्संगामृतवर्षिणे नमः
७४. ओं पुष्पमालाप्रधारकाय नमः
७५. ओं चातुर्मास्यव्रताचारिणे नमः
७६. ओं व्याघ्रसरोयशः प्रदाय नमः
७७. ओं श्रीवाग्भूणमर्मज्ञाय नमः
७८. ओं फणिफणास्वलंकृताय नमः
७९. ओं भक्तकल्पद्रुमाय नमः
८०. ओं ऊर्ध्वपुण्ड्रसुशोभिताय नमः
८१. ओं वार्त्तामालार्थतत्त्वज्ञाय नमः
८२. ओं अर्थपञ्चकबोधकाय नमः
८३. ओं पापापहाय नमः
८४. ओं वेदज्ञाय नमः
८५. ओं मायामानुषरूपकाय नमः

८६. ओं समस्तदिव्यसत्सूरिजन्मभूतलदर्शकाय नमः
८७. ओं त्रिदण्डिदेवसेवाश्रमस्थापकाय नमः
८८. ओं कल्याणप्रदाय नमः
८९. ओं गयायां रामानुजसमर्चकाय नमः
९०. ओं अनन्तशताब्द्यध्यक्षपदसुशोभिताय नमः
९१. ओं यतीन्द्रधर्ममार्त्तण्डस्रष्ट्रे नमः
९२. ओं मुक्तिनारायणायसायुज्यमुक्तिप्रदायिने नमः
९३. ओं हरे राम हरे कृष्ण नित्यकीर्त्तनकारकाय नमः
९४. ओं अयोध्याकोसलेशसदने रामादिपूजकाय नमः
९५. ओं वृन्दावनेमहाविद्यालयस्थापकाय नमः
९६. ओं साधुसेवितपादाब्जाय नमः
९७. ओं सदाचार्यावतारकाय नमः
९८. ओं श्रीभूदेवीविशिष्टनारायणसमर्चकाय नमः
९९. ओं हरिद्वारसप्तसरोवराश्रमकारकाय नमः
१००. ओं अष्टोत्तरशतदिव्यदेशमंगलकर्त्रे नमः
१०१. ओं चतुष्फलप्रदात्रे नमः
१०२. ओं विष्णुलोकप्रदायकाय नमः
१०३. ओं विन्ध्योत्तराष्टदिग्गजप्रतिष्ठात्रे नमः
१०४. ओं अतिमानवाय नमः
१०५. ओं अहमर्थविवेकनिर्मात्रे नमः
१०६. ओं शरत्पूर्णोत्सवानन्ददायकाय नमः
१०७. ओं भक्तवत्सलाय नमः
१०८. ओं गीताव्याख्यानमालाकारकाय नमः

## अथ श्रीलक्ष्मीनारायणप्रपत्तिः

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रिसद्भक्तं विष्वक्सेनमुनिं भजे॥
पद्मायताक्षि रुचिरं नवनीरदाभं श्रीविग्रहं विदधतो नयनाभिरामम्।
पीताम्बरैर्विलसतो ह्यखिलेशलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये॥१॥

सव्योर्ध्वपाणिपुटकेऽष्टदलारुणाब्जं दक्षे च कोटिशशिनिन्दकपाञ्चजन्यम्।
विभ्राजते भगवतोऽभयदस्य लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥२॥
कौमोदकीति गदयाऽखिलदैत्यहन्त्र्याऽधोराजते यदरविन्दकरः सुदक्षः।
वामार्ककोटिनिभभासितचक्रलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥३॥
श्रीचूर्णपूर्णधवलोर्ध्वविशालपुण्ड्रं दीर्घे ललाटपटले सुषमां तनोति।
वामांगिनी च कमला सुदयेश लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥४॥
काले चिरन्तनगते विविधोपचारैः सप्तर्षिभिः समुदितैः परिपूजितौ तौ।
वज्रांकुशध्वजयुतौ शुभदौ च लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥५॥
विष्वक्सुसेनयतिराजसमर्चिताङ्घ्रेर्नित्यं जनार्तिहरणार्थसमुत्थितस्य।
पीठे शिवे मणिमये जगदीश लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥६॥
तन्निःसृता भगवती न जहाति योगं पदोदकी तव पद ह्यधुनापि सक्ता।
हे कञ्जनेत्र प्रणतार्तिहरेश लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥७॥
व्यासादिभिर्मुनिजनैस्तव वेदगर्भा सिद्धाश्रमादिविविधैः प्रथिता पुरी या।
तस्यां प्रभोर्निवसतो महनीयलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥८॥
नाथ त्वमेव किल वामनकावतारे राज्यं बलेस्त्रिपदभूमिमिषेण गृह्णन्।
इन्द्राय दित्सुरददाद्वरदेश लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥९॥
श्रीकौशिकादिमुनियागक्रियाकलापेऽनाशि त्वया निशिचरो खलु रामरूपे
आरक्ष्य दीक्षितमुनिं धनुषा च लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१०॥
पत्रार्पणैर्द्रुपदजा कुसुमैर्गजेन्द्रो यं वै फलेन शवरी नृपरन्तिरद्भिः।
सम्यक् तुतोष चरणैकधनस्तु लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥११॥
हे श्रीपतीश भगवन् मकरस्थितार्के त्वं मादृशाघपतितोद्धरणाय नूनम्।
दर्शे गुरावजनि चैत्रस्थे तु लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१२॥
त्यक्तेषणा निगमकोविदविप्रपन्नाहेऽनन्तदेव तव मुग्धकरैः कटाक्षैः।
मुग्धा भवन्ति चिरकालत एव लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१३॥
सर्गस्थितिप्रलयकर्मसुसंविधातस्त्वामामनन्ति निगमा यशसानुरक्ताः।
सिद्धाश्रमस्थसुचरित्रवनेशलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१४॥
श्रीवेंकटेशभरतादिसमादृतेश, त्वां वर्णयन्ति विबुधाः किल सामगीतैः।
श्रीवत्सलाञ्छितविलक्षणशोभिलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१५॥
आस्ते चरित्रवनमेत्य मनोऽनुकूलं, सेवाधियार्चितपदो भुवि विष्णुपद्या।
सेनेश्वरादिविबुधाधिपतेश्च लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१६॥

दास्येप्सिताय पदपद्ममधुव्रताय, त्वं देवराज शरणं प्रणिदेहि मह्यम्।
तन्त्रादिभिः सुसमुदीरितकीर्तिलक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१७॥
हे मंगलेश करुणेश खगेश स्वामिन् हे भक्तमानससरोवरकेलिकारिन्।
भक्त्याश्रयाम्यहमकिञ्चनकस्तु लक्ष्मीनारायणस्य चरणौ शरणं प्रपद्ये ॥१८॥

॥ इति श्रीलक्ष्मीनारायणप्रपतिः समाप्ता ॥

## अथ श्रीलक्ष्मीनारायणमंगलाशासनम्

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रि सद्भक्तं विष्वक्सेनमुनिंभजे ॥१॥
मंगलंवेदवेद्याय श्यामसुन्दरमूर्तये
लक्ष्मीनारायणाख्याय देवाय परमात्मने ॥१॥
शङ्खपद्मगदाचक्रैः शोभिताय स्ववाससे।
लक्ष्मीनारायणायास्तु भूयोभूयो हि मंगलम् ॥२॥
कौस्तुभाभरणग्रीव वामनाश्रमवासिने।
लक्ष्मीनारायणेशाय मंगलं स्यात्किरीटिने ॥३॥
मंगलं कारूषेन्द्राय महनीयगुणाब्धये।
लक्ष्मीनारायणायेदं नित्य स्याद्बहुमङ्गलम् ॥४॥
षड्भिरैश्वर्यवैराग्ययज्ञोज्ञानबलादिभिः।
मङ्गलं परिपूर्णाय लक्ष्मीनारायणाय मे ॥५॥
सदाभिवादनार्हाय दिव्यभ्रान्तादिसूरिभिः।
लक्ष्मीनारायणायास्तु मंगलं यशसान्वितम् ॥६॥
सत्यव्रताय सत्याय त्रिसत्याय गुणात्मने।
लक्ष्मीनारायणायेदं मंगलं सत्ययोनये ॥७॥
मंगलं धर्मकामाय बहुधा धृतरूपिणे।
लक्ष्मीनारायणेशाय जगतामादिहेतवे ॥८॥
अच्युतानन्तगोविन्द रामकृष्णादियोगिभिः।
मंगलं पूजितायास्तु लक्ष्मीनारायणाय हि ॥९॥
ब्रह्मादिस्तम्बपर्यन्तं येन विश्वं विनिर्मितम्।
लक्ष्मीनारायणेशाय तस्मै स्यान्नित्यमंगलम् ॥१०॥

यस्मिन् वेदास्तु चत्वारो नेति नेति वदन्ति च।
स्यान्नित्यं मंगलं तस्मै लक्ष्मीनारायणाय हि ॥११॥
चन्द्रमा यस्य मनसः सूर्योऽजायत चक्षुषः।
लक्ष्मीनारायणायास्तु तस्मै नित्यं सुमंगलम् ॥१२॥
अणोरणीसे तुभ्यं महतश्च महीयसे।
लक्ष्मीनारायणेशाय नित्यश्रीर्नित्यमंगलम् ॥१३॥
यस्तु वेदान् समुद्धर्तुं मात्स्यं रूपं विनिर्ममे।
निर्मात्रे मंगलं तस्मै लक्ष्मीनारायणाय हि ॥१४॥
यत्प्रसादाद् दहत्यग्निः सूर्यादिश्चावभासते।
मंगलं सततं तस्मै लक्ष्मीनारायणाय मे ॥१५॥
विहन्तुं यातुधानेशान् सुरकार्यचिकीर्षया।
मंगलं ह्यवतीर्णाय लक्ष्मीनारायणाय हि ॥१६॥
माययोपात्तदेहाय भक्तदुःखविनाशिने।
मंगलं पुण्डरीकाक्षलक्ष्मीनारायणाय तु ॥१७॥
सुजनस्तवमाल्यैः स्वैः स्वर्चिताय मनोहरैः।
मंगलं नूतनं नित्यं लक्ष्मीनारायणाय हि ॥१८॥
॥ इति श्रीलक्ष्मीनारायणमङ्गलाशासनं सम्पूर्णम् ॥

## अथ श्रीलक्ष्मीनारायणसुप्रभातम्

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रिसद्भक्तं विष्वक्सेनमुनिंभजे ॥१॥
ब्रह्मा शिवः शतमखप्रमुखाः स्वदासैर्दास्यं समाचरितुमत्र सुवस्तुहस्ताः।
निद्रां जहीहि भगवन् समुपस्थितास्त्वांश्रीवाम्नाश्रमपते तव सुप्रभातम् ॥१॥
सेनेश शेष विहगेश मुखास्तवदीयाः सत्पार्षदास्तव मुखाब्जसुधां प्रपातुम्।
उद्बोधनाय तव मंगलगीतिसक्ताः सिद्धाश्रमस्थभगवँस्तव सुप्रभातम् ॥२॥
वेदा इवात्मपितरं निजरक्षितारम्, देवा उपेन्द्रमपि चैत्रवनोद्भवं त्वाम्।
संबोधयन्त्यशरणाः जहि तां सुनिद्रां लक्ष्मीधराव्यय विभो तव सुप्रभातम् ॥३॥
शय्यां गते त्वयि मुखाब्जमपश्यती ते श्रीजाह्नवी भगवती ननु दुःखिता सा।
प्रातस्तवोत्थितिविभावानहर्षघोषा सिद्धाश्रमस्थभगवँस्तव सुप्रभातम् ॥४॥

गायन्ति देवमुनयोऽदितिपुण्यपुञ्ज दैत्याधिपस्य तु बलेर्वरदृश्यभाग्य।
सत्यव्रतस्य तव सुन्दरकैतवत्वं श्रीवामनाश्रमपते तव सुप्रभातम्॥५॥
सौन्दर्यतर्कसुतपोव्रतधर्मजन्यभूर्वर्णिताक्षवनितो मुनिगौतमोऽन्यैः।
त्वत्पादपद्मरजसः सुमहत्वमेव गायत्युत्तिष्ठ भगवँस्तव सुप्रभातम्॥६॥
वीणास्वरैः सुमधुरैरमरर्षिरेषो गायन् सुरैस्तव यशोऽखिलतीर्थतीर्थम्।
सम्बोधयत्यपि च सत्कुरु तान् सनाथान् सिद्धाश्रमस्थ भगवँस्तव सुप्रभातम्॥७॥
शापप्रहार इव यस्य पदप्रहारोविप्रामरस्य भवतोऽतिविशेषलक्ष्म।
तां तेग्र्यशान्तिमुपगायति भार्गवोऽन्यैः श्रीवेदगर्भभगवँस्तव सुप्रभातम्॥८॥
ब्रह्मा समास्य तव यज्ञविद्यौ यथैव, संरक्षणं प्रकुरुते क्रतुराजकस्य।
उद्दालको मुनिरसावपि ते सुगुप्त्यै, सन्तिष्ठते जलधिराप्रिय सुप्रभातम्॥९॥
तत्ताटकादियजनारिवधादि तुष्टैर्गोब्राह्मणैस्तव सुचारुचरित्रचित्रम्।
रामायणं हि स ह गायति कौशिकोऽपि लक्ष्मीधराव्ययविभो तव सुप्रभातम्॥१०॥
धेनुव्रजोऽयमिह ते मुखपद्मशोभां, पातुं प्रबोधनविधानकृतादरस्ते।
हुङ्कारघोषमुरुधाप्रकरोति लक्ष्मी नारायणाख्य भगवँस्तव सुप्रभातम्॥११॥
भृङ्गावली कमलकोशविबन्धमुक्ता पातुं त्वदक्षिमुखपादकराब्जशोभाम्।
श्रीसामघोषमिव हि प्रकरोति लक्ष्मीनारायणाख्य भगवँस्तव सुप्रभातम्॥१२॥
गङ्गावनेचरशुकाः पिकचक्रवाकाः वैयाघ्रसुन्दरसरोवरराजहंसैः।
गायन्ति ते विशदकर्म महाघनाशं, श्रीवामनाश्रमपते तव सुप्रभातम्॥१३॥
गोदेव देव निखिलादनिपीडिता ते, प्रेष्ठातिप्रेष्ठजनिभूर्लघु मुञ्चशय्याम्।
गायन्ति चेति मुनयोऽद्यतना इहस्थाः सिद्धाश्रमस्थ भगवँस्तव सुप्रभातम्॥१४॥
अस्तं प्रयात्युदयमेष विधुश्च भास्वान्, सम्बोधयत्यपि समं निजकृत्यकालम्।
धर्मोऽप्युदेतुमुपगायति मंगलं ते, सिद्धाश्रमस्थ भगवँस्तव सुप्रभातम्॥१५॥
सुप्तास्तवैव जठरे प्रलयेऽपि जीवाः लब्ध्वा विलक्षणभवत्सकृदीक्षणं ते।
स्वे स्वे सुधर्मनिरताः सुपदं लभेरन्, श्रीवेदगर्भभगवँस्तव सुप्रभातम्॥१६॥
त्वय्युत्थिते निरुपधौ निखिलाण्डबन्धौ, नारायणात्रिजनिजाण्डसुकृत्यवाहाः।
एकत्र हृष्टरविरेष समत्र दृष्टः सिद्धाश्रमस्थ भगवँस्तव सुप्रभातम्॥१७॥
गायञ्जनान् सगुणगीतपरम्परां ते, सद्यः कुरुष्व चरणाम्बुजसक्तचित्तान्।
ते वै भ्रमन्ति सततं विरता कथायां श्रीवामनाश्रमपते तव सुप्रभावतम्॥१८॥

॥ इति श्रीलक्ष्मीनारायणसुप्रभातम्॥

## ॥अथ ध्यानम्॥

अरुणकमलसंस्था तद्रज:पुञ्जवर्णा करकमलधृतेष्टाऽभीतियुग्माम्बुजा च।
मणिकटकविचित्रालंकृता कल्पजालैः सकलभुवनमाता सन्ततं श्रीः श्रियै नः॥
(सौ. लक्ष्म्युपनिषद्)

## ॥श्रीसूक्तम्॥

ओम् हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह॥१॥
ओम् तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥२॥
ओम् अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्॥३॥
ओम् कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम्॥४॥
ओम् चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।
तां पद्मनेमिं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे॥५॥
ओं आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथविल्वः।
तस्य फलानि तपसा नुदन्तु मायांतरायांश्च बाह्या अलक्ष्मीः॥६॥
ओम् उपैतु मां देवसखः कीर्तिश्च मणिना सह।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे॥७॥
ओम् क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।
अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात्॥८॥
ओम् गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोपहये श्रियम्॥९॥
ओम् मनसः काममाकूतिं वाचः सत्यमशीमहि।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥१०॥
ओम् कर्दमेन प्रजा भूता मयि संभव कर्दम।
श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥११॥

ओम् आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।
निच देवीं मातरं श्रियं वासय मे कुले ॥१२॥
ओम् आर्द्रां पुष्करिणीं यष्टिं पिंगलां पद्ममालिनीम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१३॥
ओम् आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१४॥
ओम् तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं प्रभूतं गावोदास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥
ओम् यः शुचिः प्रयतो भूत्वा जुहूयादाज्यमन्वहम्।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

## ॥अथ ध्यानम्॥

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः॥
केयूरवान् मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः।

## ॥अथ पुरुषसूक्तम्॥

ओम् सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमि ठँ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥
ओम् पुरुष एवेद ठँ सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥
ओम् एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः।
पादोऽस्य व्विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
ओम् त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥४॥
ओम् ततो विराडजायत व्विराजोऽअधिपूरुषः।
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥५॥
ओम् तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६॥

ओम् तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दा ठँसि जज्ञिरे तस्माद्यजुस्तस्मादजाय ॥७॥
ओम् तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥
ओम् तं यज्ञं वर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥
ओम् यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किंबाहू किमूरू पादा उच्येते ॥१०॥
ओम् ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां ठँ शूद्रो अजायत ॥११॥
ओम् चन्द्रमा मनसोजातश्चक्षोः सूर्योऽअजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥
ओम् नाभ्या आसीदन्तरिक्ष ठँ शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् ॥१३॥
ओम् यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१४॥
ओम् सप्तास्यासन् परिधयस्त्रिःसप्त समिधःकृताः।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥
ओम् यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
तेहनाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥

## ॥अथोत्तरनारायणानुवाकः॥

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च व्विश्वकर्मणः समवर्त्तताग्रे।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णन्तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥२॥
प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि व्विश्वा ॥३॥
यो देवेभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥४॥

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।

यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥५॥

श्रीश्चतेलक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ

व्यात्तम्। इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण ॥६॥

(यजु. अ. ३१)

## ॥पुष्पाञ्जलिः॥

हरिः ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥१॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदम् ॥२॥
पर्याप्तानन्तराय सर्वस्तोमोतिरात्तमुत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति, हरिः ॐ शान्तिः ॥३॥
ॐ सुगन्धवल्ली शतपत्रजाती सुवर्णचम्पावकुलोद्भवानि।
गृहाण दइेवेश मयार्पितानि प्रभो हरे श्रीतुलसी-दलानि ॥४॥
हरिः ओम् अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजं।
होतारं रत्नधातमम् ॥५॥
हरिओम् इषेत्वोर्जेत्वा वायवस्थो देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण आप्यायध्वमघन्या इन्द्रायभागम्।
प्रजावतीरनमीवा अयक्ष्मा मावस्तेन ईशतमाघशंसो ध्रुवा अस्मिन् गोपतौ स्यात् बह्वीर्यजमानस्य पशून् पाहि ॥६॥
हरिः ओम् अग्न आयाहि वीतये गृणानो हव्य दातये निहोता सत्सि वर्हिषि ॥७॥
हरिः ओम् शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः ॥८॥
ओम् इति अग्रे व्याहरेत्—नम इति पश्चात् नाराणायेत्युपरिष्टात्, ॐ इत्येकाक्षरं, नम इति द्वे अक्षरे नारायणायेति पञ्चाक्षरणि एतद्वै नारायणस्याष्टाक्षरं पदं यो ह वै नारायणस्याष्टाक्षरं पदमध्येति। अनपब्रुवः सर्वमायुरेति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृत्वमश्नुते ततोऽमृतत्वमश्नुते इति एवं वेद इत्युपनिषत् ॥९॥

(सा. वे. शिरसि नारायणोपनिषद्)

अथातः समयाचारिकान् धर्मान् व्याख्यास्यामः। धर्मज्ञः समयः प्रमाणं वेदाश्चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्य-शूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ॥१०॥
अथ कर्मण्याचाग्र्यानि गृह्यन्ते उदगयनपूर्व पक्षाहः पुण्याहेषु कार्याणि यज्ञोपवीतिना प्रदंक्षिणम्। अथातो धर्म-जिज्ञासा। अथातो ब्रह्म-जिज्ञासा ॥११॥

नमस्तस्मै वराहाय लीलयोद्धरते महीम्।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥१२॥

पितरं मातरं दारान्पुत्रान्बन्धून्सखीन्गुरून्।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥१३॥

सर्वधर्मांश्च सन्त्यज्य सर्वकामाँश्च साक्षरान्।
लोकविक्रान्तचरणौ शरणं ते व्रजं विभो ॥१४॥

त्वमेय माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव।

त्वमेय विद्या द्रविणं त्वमेव,
त्वमेव सर्वं मम देव-देव ॥१५॥

पिताऽसि लोकस्य चराचरस्य,
त्वमस्य पूज्यश्च गुरुर्गवरीयान्।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो,
लोकत्रयेऽप्यप्रतिमप्रभावः ॥१६॥

तस्मात्प्रणम्य प्रणिधाय कायं-
प्रसादये त्वामहमीशमीड्यम्।

पितेव पुत्रस्य सखेव सख्युः-
प्रियः प्रियायार्हसि देव सोढुम् ॥१७॥

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरण
भगवदपचारभागवतापचारासह्यापचाररूपनानाविधानन्ताचारान्
आरब्धकार्यान् अनारब्धकार्यान् कृतान्क्रियमाणान्करिष्याणाँश्च सर्वानशेषतः क्षमस्व।
अनादिकालप्रवृत्तं विपरीतज्ञानम् आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं
चाशेषविषयमथापिवर्तिष्यमाणं च सर्वं क्षमस्व॥

मदीयानादिकर्मपवाहप्रवृत्तां भगवत्स्वरूप तिरोधानकरीं विपरीतज्ञानजनीं
स्वविषयाश्च भोग्यबुद्धेर्जननी देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावास्थितां-देवीं
गुणमयीं मायां दासभूतश्शरणागतोऽस्मि तवास्मि दास वक्तारं मां तारय ॥१८॥

इच्छामो हि महाबाहुं रघुवीरं महाबलम्।
गजेन महता यान्तं रामं छत्रावृत्ताननम् ॥१९॥

तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम्।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥२०॥

तमद्भुतं बालकमम्बुजेक्षणं,
चतुर्भुजं शंखगदार्युदायुधम्।
श्रीवत्सलक्ष्मं गलशोभि-कौस्तुभं
पीताम्बरं सान्द्रपयोदसौभगम् ॥२१॥
महार्हवैदूर्यकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम्।
उद्दामकांच्याङ्गदकङ्कणादिभि-
र्विरोचमानं वसुदेव ऐक्षत ॥२२॥
तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥२३॥
एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः।
नागपर्यंकमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥२४॥
अहो वीर्यमहोशौर्यमहोबाहुपराक्रमम्।
नारसिंह परं दैवम् अहो बलमहोबलम् ॥२५॥
वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैःसह ॥२६॥
मायावी परमानन्दस्त्यक्त्वा वैकुण्ठमुत्तमम्।
स्वामी पुष्करणीतीरे रमया सह मोदते ॥२७॥
मुक्तिदश्च मुमूक्षूणां सर्वेषां सर्वकामदः।
क्रीडार्थं लोकरक्षार्थं वसाम्यत्र श्रिया सह ॥२८॥
वेंकटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किंचन।
वेंकटेशसमो देवो न भूतो न भविष्यति ॥२९॥
जपापरिमलोल्लासवासिताधरपल्लवम्।
मुखं वरदराजस्य मुग्धस्मितमुपास्महे ॥३॥।
फाल्गुने मासि पूर्णायामुत्तरर्क्षेन्दुवासरे।
गोविन्दराजो भगवान् प्रादुरासीन्महामुनिः ॥३१॥
कस्तूरीकलितोर्ध्वपुण्ड्रतिलकं कर्णान्तलोलेक्षणम्
मुग्धस्मेरमनोहराधरदलं मुक्ताकिरीटोज्ज्वलम्।
पश्यन्मानसपश्यतोहरवरं पर्यायपंकेरुहम्।
श्रीरंगाधिपतेःकदाऽनुवदनं सेवेयभूयोऽप्यहम् ॥३२॥
कदा पुनः शंखरथांगकल्पकध्वजारिविन्दांकुशवज्रलाञ्छनम्

त्रिविक्रमत्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलंकरिष्यति ॥३३॥

अखिलभुवनजन्मस्थेमभंगादिलीले,
विनतविविधभूत व्रातरक्षैकदीक्षे।
श्रुतिशिरसिविदीप्ते ब्रह्मणि श्रीनिवासे,
भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥३४॥

पाराशर्य्यवचस्सुधामुपनिषद्'''दुग्धाब्धिमध्योद्धृताम्।
संसाराग्निविदीपनव्यपगत प्राणात्मसञ्जीवनीम्॥
पूर्वाचार्यसुरक्षितांबहुमति, व्याघातदूरस्थिताम्।
आनीतान्तु निजाक्षरैस्सुमनसो भौमं पिबन्त्वन्वहम् ॥३५॥

जयति सकलविद्यावाहिनीजन्मशैलो-
जनिपथपरिवृत्तिश्रान्तविश्रान्तशाखी।,
निखिलकुमतिमाया-शर्वरीबालसूर्यो,
निगमजलधिवेला-पूर्णचन्द्रो यतीन्द्रः ॥३६॥

नमः प्रणवशोभितं नवकाषायखण्डाऽम्बरम्,
त्रिदण्डपरिमण्डितं त्रिविधतत्त्वनिर्वाहकम्।
दयान्वितदृगञ्चलं दलितवादिवाग्वैभवम्।
शमादिगुणसगरं शरणमेधि रामानुजम् ॥३७॥

उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम्।
शरणागतसार्थवाहमीडे शिखया शेखरिणं पतिं यतीनाम् ॥३८॥

सुशंखचक्रलाञ्छनः सदूर्ध्वपुण्ड्रमण्डितः
सुकण्ठलग्नसत्तुलस्यनर्घपद्ममालिमः
सितान्तरीय सोत्तरीय यज्ञसूत्रशोभितो-
ममाविरस्तु मानसे गुरुस्तु वेंकटेश्वरः ॥३९॥

नमञ्जनस्यचित्तभित्तिभक्तिचित्रतूलिका,
भवाहिवीर्यमञ्जने नरेन्द्रमन्त्रयन्त्रणा।
प्रपन्नलोककैरव प्रसन्नचारुचन्द्रिका,
शठारिहस्तमुद्रिका हठाद् धुनोतु मे तमः ॥४०॥

भरताय परं नमोऽस्तु तस्मै प्रथमोदाहरणाय भक्तिभाजाम्,
यदुपज्ञमशेषतः पृथिव्यां प्रथितो राघवपादुकाप्रभावः ॥४१॥

श्रीनगर्यां महापुर्य्यां ताम्रपर्ण्युत्तरे तटे,
श्रीतिंतिणीमूलधाम्नि शठकोपाय मंगलम् ॥४२॥

(१) हरिः ॐ केशवाय नमः (२) ॐ नारायणाय नमः
(३) ॐ माधवाय नमः (४) ॐ गोविन्दाय नमः
(५) ॐ विष्णवे नमः (६) ॐ मधुसूदनाय नमः
(७) ॐ त्रिविक्रमाय नमः (८) ॐ वामनाय नमः
(९) ॐ श्रीधराय नमः (१०) ॐ हृषीकेशाय नमः
(११) ॐ पद्मनाभाय नमः (१२) ॐ दामोदराय नमः
(१३) ॐ लक्ष्मीनारायणाय नमः (१४) ॐ श्रीशठकोपाय नमः
(१५) ॐ श्रीदिव्यसूरिणे नमः (१६) ॐ श्रीमते रामानुजाय नमः

नृत्यवाद्यादिगीतादिपुराणपठनादिभिः।
राजोपचारैः सकलैः सन्तुष्टो भव राघव॥

## ॥अथ श्रीकृष्णाष्टोत्तरशतनामावलिः॥

१, ओम् केशवाय नमः
२, ओम् नारायणाय नमः
ओम् माधवाय नमः
ओम् गोविन्दाय नमः
ओम् विष्णवे नमः
ओम् मधुसूदनाय नमः
ओम् त्रिविक्रमाय नमः
ओम् वामनाय नमः
ओम् श्रीधराय नमः
ओम् हृषीकेशाय नमः
ओम् पद्मनाभाय नमः
ओम् दामोदराय नमः
ओम् श्रीकृष्णाय नमः
ओम् कमलनाथाय नमः
ओम् वासुदेवाय नमः
ओम् सनातनाय नमः
ओम् वसुदेवात्मजाय नमः
ओम् पुण्याय नमः
ओम् लीलामानुषविग्रहाय नमः
ओम् श्रीवत्सकौस्तुभधराय नमः
ओम् यशोदावत्सलाय नमः
ओम् हरये नमः
ओम् चतुर्भुजात्तचक्राब्जगदाखड्गायुदाधाय नमः
ओम् देवकीनन्दनाय नमः
ओम् श्रीशाय नमः
ओम् नन्दगोपप्रियात्मजाय नमः
ओम् यमुनावेगसंहारिणे नमः
ओम् बलभद्रप्रियानुजाय नमः
ओम् पूतनाजीवितहराय नमः
ओम् शकटासुरभञ्जनाय नमः
ओम् नवनीतविलिप्तांगाय नमः
ओम् संच्चितानन्द विग्रहाय नमः
नन्द ब्रजनान्दिने नमः

ओम् नवनीतनटाय नमः
ओम् नवनीतनवाहराय नमः
ओम् षोडशस्त्रीसहस्त्रेशाय नमः
ओम् शुकवागमृताब्धीन्दवे नमः
ओम् योगिनां पतये नमः
ओम् अनन्ताय नमः
ओम् तृणीकृततृणावर्ताय नमः
ओम् उत्तालतालभेत्रे नमः
ओम् गोपगोपीश्वराय नमः
ओम् कोटिसूर्यसमप्रभाय नमः
ओम् परं ज्योतिषे नमः
ओम् यदूद्वहाय नमः
ओम् पीतवाससे नमः
ओम् गोवर्द्धनाचलोद्धर्त्रे नमः
ओम् सर्वपालकाय नमः
ओम् निरंजनाय नमः
ओम् कञ्जलोचनाय नमः
ओम् मथुरानाथाय नमः
ओम् बलिने नमः
ओम् तुलसीदामविभूषणाय नमः
ओम् नरनारायणात्मकाय नमः
ओम् मायिने नमः

ओम् अनघाय नमः
ओम् मुचुकुन्दप्रसादकाय नमः
ओम् त्रिभंगीललिताकृतये नमः
ओम् गोविन्दाय नमः
ओम् वत्सवाटचराय नमः
ओम् धेनुकासुरखण्डनाय नमः
ओम् यमलार्जुनभंजनाय नमः
ओम् तमालश्यामलाकृतये नमः
ओम् योगिने नमः
ओम् इलापतये नमः
ओम् यादवेन्द्राय नमः
ओम् वनमालिने नमः
ओम् पारिजातापहारकाय नमः
ओम् गोपालाय नमः
ओम् अजाय नमः
ओम् कामजनकाय नमः
ओम् शत्रुघ्नाय नमः
ओम् द्वारिकानायकाय नमः
ओम् वृन्दावनान्तसंचारिणे नमः
ओम् स्यमन्तकमणिहर्त्रे नमः
ओम् कुब्जाकृष्टाम्बराय नमः
ओम् परमपुरुषाय नमः

ओम् मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय नमः

ओम् संसारवैरिणे नमः
ओम् मुरारये नमः
ओम् अनादिब्रह्मचारिणे नमः
ओम् शिशुपालशिरश्छेत्रे नमः
ओम् विदुराक्रूरवरदाय नमः
ओम् सत्यवाचे नमः
ओम् सत्यभामारताय नमः
ओम् सुभद्रापूर्वजाय नमः

ओम् कंसारये नमः
ओम् नरकान्तकाय नमः
ओम् कृष्णव्यसनकर्षकाय नमः
ओम् दुर्योधनकुलान्तकाय नमः
ओम् विश्वरूपप्रदर्शकाय नमः
ओम् सत्संकल्पाय नमः
ओम् जयिने नमः
ओम् जिष्णवे नमः

ओम् भीष्ममुक्तिप्रदाय नमः
ओम् जगद्गुरवे नमः
ओम् जगन्नाथाय नमः
ओम् वेणुनादविशारदाय नमः
ओम् वृषभासुरविध्वंसिने नमः
ओम् बाणासुरान्तकाय नमः
ओम् युधिष्ठिरप्रतिष्ठात्रे नमः
ओम् बर्हिबर्हावतंसकाय नमः
ओम् पार्थसारथये नमः
ओम् अव्यक्ताय नमः
ओम् गीतामृतमहोदधये नमः
ओम् कालीयफणमाणिकयरंजितश्रीपदाम्बुजाय नमः
ओम् दामोदराय नमः
ओम् यज्ञभोक्त्रे नमः
ओम् दानवेन्द्रविनाशकाय नमः
ओम् नारायणाय नमः
ओम् परब्रह्मणे नमः
ओम् पन्नगाशनवाहनाय नमः
ओम् जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नमः
ओम् पुण्यश्लोकाय नमः
ओम् दयानिधये नमः
ओम् तीर्थ पादाय नमः
ओम् वेद वेद्याय नमः
ओम् सर्वभूतात्मकाय नमः
ओम् सर्वग्रहरूपिणे नमः
ओम् परात्पराय नमः
ओम् श्रीरुक्मिणीसत्यभामासमेत-श्रीगोपालस्वामिने नमः

॥ इति श्रीकृष्णाष्टोत्तरशतनामावलिः ॥

## ॥अथ श्रीरामाष्टोत्तरशतनामावलिः॥

१, ओम् श्रीरामाय नमः
२, ओम श्रीरामभद्राय नमः
ओम् श्रीरामचन्द्राय नमः
ओम् शाश्वताय नमः
ओम् राजीवलोचनाय नमः
ओम् श्रीमते नमः
ओम् राजेन्द्राय नमः
ओम् रघुपुंगवाय नमः
ओम् जानकीवल्लभाय नमः
ओम् जैत्राय नमः
ओम् जितामित्राय नमः
ओम् जनार्दनाय नमः
ओम् विश्वामित्रप्रियाय नमः
ओम् दान्ताय नमः
ओम् शरणत्राणतत्पराय नमः
ओम् बालिप्रमथनाय नमः
ओम् वाग्मिने नमः
ओम् सत्यवाचे नमः
ओम् व्रतधराय नमः
ओम् सदाहनुमदाश्रिताय नमः

ओम् कौशलेन्द्राय नमः
ओम् विराधवधपण्डिताय नमः
ओम् हरकोदण्डखण्डनाय नमः
ओम् दशग्रीवशिरोहराय नमः
ओम् तारकान्ताय नमः
ओम् वेदात्मने नमः
ओम् दूषणत्रिशिरोहन्त्रे नमः
ओम् त्रिगुणात्मकाय नमः
ओम् त्रिलोकात्मने नमः
ओम् त्रिलोकरक्षकाय नमः
ओम् दण्डकारण्यकर्तनाय नमः
ओम् पितृभक्ताय नमः
ओम् जितेन्द्रियाय नमः
ओम् जितामित्राय नमः
ओम् ऋक्षवानरसंघातिने नमः
ओम् जयन्तत्राणवराय नमः
ओम् सर्वदेवादिदेवाय नमः
ओम् मायामारीचहंन्त्रे नमः
ओम् महाभुजाय नमः
ओम् सर्वपुण्फलाधिकाय नमः
ओम् ब्रह्मण्याय नमः
ओम् महायोगिने नमः
ओम् सुग्रीवेप्सितराज्यप्रदाय नमः
ओम् आदिपुरुषाय नमः
ओम् महापुरुषाय नमः
ओम् दयासागराय नमः
ओम् स्मितवक्त्राय नमः
ओम् पूर्वभाषिणे नमः
ओम् अनन्तगुणगंभीराय नमः
ओम् मायामानुषचारित्राय नमः
ओम् सेतुकृते नमः
ओम् खरध्वंसिने नमः
ओम् विभीषणपरित्रात्रे नमः
ओम् सप्ततालप्रभेत्रे नमः
ओम् जामदग्न्यमहादर्पदलनाय नमः
ओम् वेदान्तसाराय नमः
ओम् भवरोगभेषजाय नमः
ओम् त्रिमूर्तये नमः
ओम् त्रिविक्रमाय नमः
ओम् पुण्यचारित्रकीर्तनाय नमः
ओम् धन्विने नमः
ओम् अहल्याशापशमनाय नमः
ओम् वरप्रदाय नमः
ओम् जितक्रोधाय नमः
ओम् जगद्गुरवे नमः
ओम् चित्रकूटसमाश्रयाय नमः
ओम् सुमित्रापुत्रसेविताय नमः
ओम् मृतवानरजीवनाय नमः
ओम् महादेवाय नमः
ओम् सर्वदेवस्तुताय नमः
ओम् सौम्याय नमः
ओम् मुनिसंस्तुताय नमः
ओम् महोदराय नमः
ओम् स्मृतसर्वाघनाशनाय नमः
ओम् परमपुरुषाय नमः
ओम् पुण्योदयाय नमः
ओम् पुराणपुरुषोत्तमाय नमः
ओम् मितभाषिणे नमः
ओम् राघवाय नमः
ओम् धीरोदात्तगुणोत्तमाय नमः
ओम् महादेवादिपूजिताय नमः
ओम् जितवाराशये नमः

ओम् सर्वतीर्थमयाय नमः
ओम् हरये नमः
ओम् श्यामांगाय नमः
ओम् सुन्दराय नमः
ओम् शूराय नमः
ओम् पीतवाससे नमः
ओम् धनुर्धराय नमः
ओम् सर्वयज्ञाधिपतये नमः
ओम् यज्वने नमः
ओम् जरामरणवर्जिताय नमः
ओम् विभीषणप्रतिष्ठात्रे नमः
ओम् परमात्मने नमः
ओम् परस्मै ब्रह्मणे नमः
ओम् सच्चिदानन्दविग्रहाय नमः
ओम् परस्मै ज्योतिषे नमः
ओम् परस्मै धाम्ने नमः
ओम् पराकाशाय नमः
ओम् परात्पराय नमः
ओम् परेशाय नमः
ओम् पारगाय नमः
ओम् पराय नमः
ओम् सर्वदेवात्मकाय नमः
ओम् परस्मै नमः

॥ इति श्रीरामाष्टोत्तरशतनामावलिः ॥

## ॥अथ लक्ष्म्या-अष्टोत्तरशतनामावलिः॥

१. ओम् श्रीमहालक्ष्म्यै नमः
२. ओम् प्रकृत्यै नमः
ओम् विकृत्यै नमः
ओम् विद्यायै नमः
ओम् सर्वभूवहितप्रदायै नमः
ओम् श्रद्धायै नमः
ओम् विभूत्यै नमः
ओम् सुरभ्यै नमः
ओम् परमात्मिकायै नमः
ओम् वाचे नमः
ओम् पद्मालयायै नमः
ओम् पद्मायै नमः
ओम् शुच्यै नमः
ओम् स्वाहायै नमः
ओम् स्वधायै नमः
ओम् सुधायै नमः
ओम् धन्यायै नमः
ओम् हिरण्यमय्यै नमः
ओम् लक्ष्म्यै नमः
ओम् नित्यपुष्टायै नमः
ओम् विभावर्यै नमः
ओम् आदित्यै नमः
ओम् दित्यै नमः
ओम् दिप्तायै नमः
ओम् वसुधायै नमः
ओम् वसुधारिण्यै नमः

ओम् कमलायै नमः
ओम् कामक्षायै नमः
ओम् अनुग्रहप्रदायै नमः
ओम् अनघायै नमः
ओम् अशोकायै नमः
ओम् दीप्तायै नमः
ओं लोकशोकविनाशिन्यै नमः
ओं करुणायै नमः
ओम् पद्मप्रियायै नमः
ओम् पद्माक्ष्यै नमः
ओम् पद्मोद्भवायै नमः
ओम् पद्मनाभप्रियायै नमः
ओम् पद्ममालाधरायै नमः
ओम् पद्मिन्यै नमः
ओम् पुण्यगन्धायै नमः
ओम् चन्द्रवदनायै नमः
ओम् चन्द्रसहादर्यै नमः
ओम् चन्द्ररुपायै नमः
ओम् इन्दुशीतलायै नमः
ओम् पुष्ट्यै नमः
ओम् विमलायै नमः
ओम् तुष्ट्यै नमः
ओम् प्रीतिपुष्करिण्यै नमः
ओम् शुक्लमाल्याम्बरायै नमः
ओम् श्रियै नमः
ओम् विल्वनिलयायै नमः
ओम् यशस्विन्यै नमः
ओम् उदाराङ्गायै नमः
ओम् हेममालिन्यै नमः
ओम् सिद्ध्यै नमः
ओम् शुभप्रदायै नमः

ओम् कान्तायै नमः
ओम् क्रोधसंभवायै नमः
ओम् बुद्ध्यै नमः
ओम् हरिवल्लभायै नमः
ओम् अमृतायै नमः

ओं धर्मनिलयायै नमः
ओम् लोकमात्रे नमः
ओम् पद्महस्तायै नमः
ओम् पद्मसुन्दर्यै नमः
ओम् पद्ममुख्यै नमः
ओम् रमायै नमः
ओम् देव्यै नमः
ओम् पद्मगन्धिन्यै नमः
ओम् प्रभायै नमः
ओम् चन्द्रायै नमः
ओम् चतुर्भुजायै नमः
ओम् इन्दिरायै नमः
ओम् आह्लादजनन्यै नमः
ओम् शिवायै नमः
ओम् विश्वजनन्यै नमः
ओम् दारिद्र्यनाशिन्यै नमः
ओम् शान्तायै नमः

ओम् भास्कर्यै नमः
ओम् वरारोहायै नमः
ओम् वसुन्धरायै नमः
ओम् हरिण्यै नमः
ओम् धनधान्यकर्यै नमः
ओम् स्त्रेणसौम्यायै नमः
ओम् नृपवेश्मतानन्दायै नमः

ओम् वरलक्ष्म्यै नमः
ओम् शुभायै नमः
ओम् समुद्रतनयायै नमः
ओम् मङ्गलादेव्यै नमः
ओम् विष्णुपत्न्यै नमः
ओम् नारायणसमाश्रितायै नमः
ओम् देव्यै नमः
ओम् नवदुर्गायै नमः
ओम् ब्रह्मविष्णु शिवात्मिकायै नमः
ओम् त्रिकालज्ञानसम्पन्नायै नम्

ओम् वसुप्रदायै नमः
ओम् हिरण्यप्रकारायै नमः
ओम् जयायै नमः
ओम् विष्णुवक्षस्थलस्थितायै नमः
ओम् प्रसन्नाक्ष्यै नमः
ओम् दारिद्र्यध्वंसिन्यै नमः
ओम् सर्वोपद्रववारिण्यै नमः
ओम् महाकाल्यै नमः
ओम् भुवनेश्वर्यै नमः

॥ इति लक्ष्म्या-अष्टोत्तरशतनामावलिः ॥

## ॥अथ द्वादशश्रीलक्ष्मीनामावलिः॥

(१) ॐ श्रियै नमः
(२) ॐ अमृतोद्भवायै नमः
(३) ॐ कमलायै नमः
(४) ॐ चन्द्रसौन्दर्यै नमः
(५) ॐ विष्णुपत्न्यै नमः
(६) ॐ वैष्णव्यै नमः
(७) ॐ वरारोहायै नमः
(८) ॐ हरिवल्लभायै नमः
(९) ॐ शाङ्गिर्ण्यै नमः
(१०) ॐ देवदेविकायै नमः
(११) ॐ लोकसुन्दर्यै नमः
(१२) ॐ महालक्ष्म्यै नमः

ॐ नमः श्रियै लोकधात्र्यै ब्रह्ममात्रे नमो नमः।
नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः।
प्रसन्नमुखपद्मायै पद्मकान्त्यै नमो नमः।
नामो विल्ववनस्थायै विष्णुपत्न्यै नमो नमः।
विचित्रक्षौभधारिण्यै पृथुश्रोण्यै नमो नमः।
पक्वबिल्वफलापीनतुंगस्तन्यै नमो नमः।
संरक्तपद्मपभाक्षकरपादतले शुभे,
संरक्तांगदकेयूर-काञ्चीनूपुरशोभितै।
यक्षकर्दमसंलिप्ते सर्वांगे कनकोज्ज्वले,

मांगल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषिते।
स्ताटंकैरवतंसैश्च शोभमानमुखाम्बुजे,
पद्महस्ते नमस्तुभ्यं प्रसीद हरिवल्लभे।
ऋक् यजुस्सामरूपायै विद्यायै ते नमो नमः,
प्रसीदास्मान् कृपादृष्टिपातैरालोकयाब्धिजे।
नृत्यवाद्यादिगीतादि-पुराणपठनादिभिः,
राजोपचारैः सकलैः सन्तुष्टो भव राघव॥
सन्तुष्टो भव राघव
सन्तुष्टो भव राघव
वाराहपुराणान्तर्गत—

## ॥अथ श्रीवेङ्कटेश अष्टोत्तरशतनामावलिः॥

ओम् वेंकटेशाय नमः
ओम् शेषाद्रिनिलयाय नमः
ओम् बृषदृग्गोचराय नमः
ओम् विष्णवे नमः
ओम् सदञ्जनगिरीशाय नमः
ओम् वृषाद्रिपतये नमः
ओम् मेरुपुत्रगिरीशाय नमः
ओम् सरःस्वामितटिजुषे नमः
ओम् कुमाराकल्पसेव्याय नमः
ओम् वज्रिदृग्विषयाय नमः
ओम् सुवर्चलासुतन्यस्तसैन्यापैत्यभराय नमः
ओम् रामाय नमः
ओम् पद्मनाभाय नमः
ओम् सदावायुस्तुताय नमः
ओम् त्यक्तवैकुण्ठलोकाय नमः
ओम् गिरिकुञ्जविहारिणे नमः
ओम् हरिवन्दनगोत्रेन्द्रस्वामिने नमः
ओम् शंखराजन्यनेत्राब्जविषयाय नमः
ओम् वसुपरिचरत्रात्रे नमः
ओम् कृष्णाय नमः
ओम् अब्धिकन्यापरिष्वक्तवक्षसे नमः
ओम् वेंकटेशाय नमः
ओम् सनकादिमहायोगिपूजिताय नमः
ओम् देवजितप्रसुखानन्तदैत्यसंघप्रणाशिने नमः
ओम् श्वेतद्वीपवसनमुक्तपूजिताङ्घ्रियुगाय नमः
ओम् शेषपर्वतरूपत्वप्रकाशनपराय नमः
ओम् तार्क्ष्याचल निवासिने नमः
ओम् सानुस्थापिततार्क्ष्याय नमः
ओम् मायागूढविमानाय नमः
ओम् गरुडस्कन्धवासिने नमः
ओम् अनन्तशिरसे नमः

ओम् अनन्ताक्षाय नमः

ओम् अनन्तचरणाय नमः

ओम् श्रीशैलनिलयाय नमः

ओम् दामोदराय नमः

ओम् नीलमेघनिभाय नमः

ओम् ब्रह्मादिदेवदुर्दर्शविश्वरूपाय नमः

ओम् वैकुण्ठागतसद्धेमविमानान्तर्गताय नमः

ओम् अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय नमः

ओम् वासुदेवाय नमः

ओम् हरये नमः

ओम् तीर्थपञ्चकवासिने नमः

ओम् वामदेवप्रियाय नमः

ओम् जनकेष्टप्रदाय नमः

ओम् मार्कण्डेयमहातीर्थजातपुण्यप्रदाय नमः

ओम् वाक्यपतिब्रह्मदात्रे नमः

ओम् चन्द्रलावण्यदायिने नमः

ओम् नारायणनगेशाय नमः

ओम् ब्रह्मकल्पोत्सवाय नमः

ओम् शंखचक्रवरानम्रलसत्करतलाय नमः

ओम् श्रवणमृगमदासक्तविग्रहाय नमः

ओम् केशवाय नमः

ओम् नित्ययौवनमूर्तये नमः

ओम् अर्थितार्थप्रदात्रे नमः

ओम् विश्वतीर्थाघहारिणे नमः

ओम् तीर्थस्वामिसरःस्नातजनाभीष्टप्रदायिने नमः

ओम् कुमारधारिकावासस्कन्दाभीष्टप्रदाय नमः

ओम् जानुदघ्नसमुद्भूतपोत्रिणे नमः

ओम् कूर्ममूर्तये नमः

ओम् किन्नरद्वन्द्वशापान्तप्रदात्रे नमः

ओम् विभवे नमः

ओम् वैखानसमुनिश्रेष्ठपूजिताय नमः

ओम् सिंहाचलनिवासाय नमः

ओम् श्रीमन्नारायणाय नमः

ओम् सद्भक्तनीलकण्ठार्च्यनृसिंहाय नमः

ओम् कुमुदाक्षगणश्रेष्ठसैन्यपत्यप्रदाय नमः

ओम् दुर्मेधस्प्राणहर्त्रे नमः

ओम् श्रीधराय नमः

ओम् क्षत्रियान्तकरामाय नमः

ओम् मत्स्यरूपाय नमः

ओम् पाण्डवारिप्रहर्त्रे नमः

ओम् श्रीकराय नमः

ओम् उपत्यकाप्रदेशस्थशंकरध्यातमूर्तये नमः

ओम् रुक्माब्जसरसोकूललक्ष्मीकृततपस्विने नमः

ओम् लसत्लक्ष्मीकराम्भोजदत्तकह्लारकस्रजे नमः

ओम् शालग्रामनिवासाय नमः

ओम् सुतदृग्गोचराय नमः

ओम् नारायणार्थिताशेजनदृग्विषयाय नमः
ओम् मृगयारसिकाय नमः
ओम् वृषभासुरहारिणे नमः
ओम् अञ्जनागोत्रपतये नमः
ओम् वृषभाचलवासिने नमः
ओम् अञ्जनासुतदात्रे नमः
ओम् माधवीयाघहारिणे नमः
ओम् प्रियप्रियांगबुभुक्षाय नमः
ओम् श्वेतकोलवराय नमः
ओम् नीलधेनुपयोधारासेकदेहोद्‌भवाय नमः
ओम् शंकरप्रियमित्राय नमः
ओम् चोलपुत्रप्रियाय नमः
ओम् सुधर्मिणीसुचैतन्यप्रदात्रे नमः
ओम् मधुघातिने नमः
ओम् कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय नमः
ओम् वराहाचलनाथाय नमः
ओम् बलभद्राय नमः
ओम् त्रिविक्रमाय नमः
ओम् महते नमः
ओम् हृषीकेशाय नमः
ओम् अच्युताय नमः
ओम् नीलाद्रिनिलयाय नमः
ओम् क्षीराब्धिनाथाय नमः
ओम् वैकुण्ठाचलवासिने नमः
ओम् मुकुन्दाय नमः
ओम् अनन्ताय नमः
ओम् विरञ्च्यभ्यर्थितानीतसौम्यरूपाय नमः
ओम् सुवर्णमुखरिस्नातमनुजाभीष्टदायिने नमः
ओम् हलायुधजगत्तीर्थसमस्तफलदायिने नमः
ओम् गोविन्दाय नमः
ओम् श्रीनिवासाय नमः

॥ इति श्रीवेंकटेश-अष्टोत्तरशतनामावलिः ॥

## ॥मंगल आरती॥

मेषमासे सिते पक्षे नवम्याँ पुस्य संयुते।
डेहरी नगरे जातं वन्दे विजय राघवम्॥
श्रियः कान्ताय देवाय कल्याणनिधयेऽर्थिनाम्।
श्रीवैकुण्ठनिवासाय श्रीनिवासाय मंगलम्॥१॥
लक्ष्मीशविभ्रमालोलसभ्रूविभ्रमचक्षुषे।
चक्षुषे सर्वलोकानां वेंकटेशाय मंगलम्॥

श्रीवैकुण्ठविरक्ताय स्वामिपुष्करणीतटे।
रमया रममाणाय वेंकटेशाय मंगलम् ॥२॥
कमलाकुचकस्तूरीकर्दमांकितवक्षसे।
यादवाद्रिनिवासाय सम्पत्पुत्राय मंगलम् ॥३॥
सुस्मिताय सुनाशाय सुन्दरे सुदृशे भ्रुवे।
सुललाटकिरीटाय रंगराजाय मंगलम् ॥४॥
मंगलं कौशलेन्द्राय महनीयगुणात्मने।
चक्रवर्तितनूजाय सार्वभौमाय मंगलम् ॥५॥
श्रीमद्गोपालबालाय गोदाभीष्टप्रदायिने।
श्रीसत्यासहितायास्तु कृष्णदेवाय मंगलम् ॥६॥
नीलाचलनिवासाय नित्याय परमात्मने।
सुभद्राप्राणनाथाय जगन्नाथाय मंगलम् ॥७॥
आप्तकामाय पूर्णाय पुरुषोत्तमवासिने।
परस्मै पुरुषायास्तु जगन्नाथाय मंगलम् ॥८॥
सुभद्राप्राणनाथाय सुभद्राहनशालिने।
बलभद्रसुनाथाय जगन्नाथाय मंगलम् ॥९॥
आजन्मना षोडशाब्दात्स्तन्याद्यनभिलाषिणे।
श्रीशानुभवयुष्टाय शठकोपाय मंगलम् ॥१०॥
कूरेशकूरुकानाथदाशरथ्यादिदेशिकैः।
तच्छिष्याभ्यार्थिने तस्मै यतिराजाय मंगलम् ॥११॥
मंगलाशासनपरैर्मदाचार्य्यपुरोगमैः।
सर्वैश्चपूर्वैराचार्यै सत्कृतायास्तु मंगलम् ॥१२॥

## ॥मंगल आरती॥

सर्वदेशदिशाकालेष्वव्याहतपराक्रमा।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्द्धताम् ॥१॥
रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला।
दिगन्तव्यापिनी भूयात्सा हि लोकहितैषिणी ॥२॥
श्रीमन् श्रीरङ्ग श्रियमनुपद्रवामनुदिनं संवर्द्धय।
श्रीमन् श्रीरङ्ग श्रियमनुपद्रवामनुदिनं संवर्द्धय ॥३॥

नमः श्रीशैलनाथाय कुन्तीनगरजन्मने।
प्रसादलब्धपरमप्राप्यकैंकर्यशलिने ॥४॥
श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम्।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥५॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥६॥
यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्योमोहतस्तदितराणि तृणाय मेने।
अस्मद् गुरोर्भगवतोऽस्य दयैकसिन्धो
रामानुजस्य चरणौ शरणं प्रपद्ये ॥७॥
मातपितायुवतयस्तनयाविभूतिः,
सर्वं यदेव नियमेन मदन्वयानाम्।
आद्यस्य नः कुलपतेर्वकुलाभिरामम्
श्रीमत्तदङ्घ्रियगलं प्रणमामि मूर्ध्ना ॥८॥
भूतं सरश्च महदाह्वयभट्टनाथ,
श्रीभक्तिसारकुलशेखरयोगिवाहान्।
भक्तांघ्रिरेणुपरकालयतीन्द्रमिश्रान्।
श्रीमत्परांकुशमुनिं प्रणतोऽस्मि नित्यम् ॥९॥
गुरुमुखमनधीत्य प्राह वेदानशेषान्
नरपतिपरिक्लृप्तं शुल्कमादातुकामः।
श्वसुरममरवंद्यं रंगनाथस्य साक्षात्।
द्विजकुलतिलकं तं विष्णुचित्तं नमामि ॥१०॥
अस्मद्देशिकमस्मदीयपरमाचार्यानशेषान्गुरून्,
श्रीमल्लक्ष्मणयोगिपुंगवमहापूर्णौ मुनिं यामुनम्।
रामं पद्मविलोचनम् मुनिवरं नाथं शठद्वेषिणम्,
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये ॥११॥
मन्दाकिनी–सलिलसिक्तपदारविन्दम्,
दिव्याब्जचक्रसुगदाप्तकरारविन्दम्।
ब्रह्मेशशेषविहगेशसमर्चितांगम्,
सिद्धाश्रमस्थमनिशं भगवन्तमीडे ॥१२॥
साकेते कटरापणे सुललिते दक्षे सरय्वास्तटे,
भव्ये नव्यसुकोशलेशसदने शान्ताकृतिं सुन्दरम्।

दिव्यं तं विवुधेश्वरार्चितपदं कोदण्डपाणिं प्रभुम्,
सीतालक्ष्मणवातजातसहितं श्रीरामचन्द्रंभजे ॥१३॥
विख्याते डेहरीपुरे सुललिते विन्ध्योत्तरे पावने।,
सव्येशोणतटेयतीन्द्रकलितं रुक्माञ्चितम् सुन्दरम्।
श्रीवात्सांककिरीटकुण्डलधरं तूणीर चापान्वितम्।
सीतालक्ष्मणवातजातविजयश्रीराघवं संश्रये ॥१४॥
वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम् ॥१५॥
श्रीवत्सवंशाम्बुधिपूर्णचन्द्रम्
श्रीश्रीनिवासार्यगुरोस्तनूजम्।
तत्प्राप्तवेदार्थयुगान्तसार–
मनन्तवर्यं प्रणमामि नित्यम् ॥१६॥
श्रीवत्सवंशकलशोदधिपूर्णचनद्रम्
श्रीकृष्णसूरिपदपंकजभृंगराजम्।
श्रीरंगवेंकटगुरूत्तमलब्धबोधम्
भक्त्या भजामि गुरूवर्यमनन्तसूरिम् ॥१७॥
श्रीवादिभीकरगुरूत्तमवंशसिन्धु–
शीतांश्वनन्त्तगुरुवर्य्यपदाब्जभृंगम्।
श्रीगौतमान्वयपयोनिधिपूर्णचन्द्रम्
श्रीश्रीपतिं गुरुवरं शरणं प्रपद्ये ॥१८॥
श्रीवत्सवंशकलशोदधिपूर्णचन्द्रम्
श्रीपत्यभिख्यगुरुवर्य्यपदाब्जभृंगम्।
शान्त्यादिसद्‌गुणनिधिं परमार्थनिष्ठम्
नौम्यच्युतं गुरुवरं शिरसा सदाहम् ॥१९॥
अच्युतार्यपदाम्भोजचञ्चरीकायितान्तरम्।
कान्यकुब्जकुलोत्पन्नं विष्णुचित्तं गुरुभ्भजे ॥२०॥
श्रीकान्यकुब्जकुलवारिधिपूर्णचन्द्रम्
श्रीविष्णुचित्तगुरुवर्यपदाब्जभृंगम्।
ज्ञानादिसद्‌गुणगणौघमहाम्बुराशिम्

ध्यायामि साधुशरणाख्यगुरुं सदाहम् ॥२१॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्र-
मार्यस्य साधुशरणस्य कृपैकपात्रम्॥
ज्ञानादिसद्गुणनिधिं करुणानिधानम्
श्रीरामकृष्णगुरुवर्यमहं प्रपद्ये ॥२२॥

काषायं यज्ञसूत्रं शुचिवपुषि तथा चोर्ध्वपुण्ड्रं च भाले
यस्यास्ते दक्षहस्ते कलिकुमतिगिरीन्द्रेन्द्रवज्रं त्रिदण्डम्।
संसाराग्निप्रशान्त्यैभृतजलममलं दारुपात्रं पवित्रम्
श्रीविष्वक्सेनसूरेः पदकमलयुगं श्रेयसे संश्रयामि ॥२३॥

श्रीमते रम्यजामातृमुनीन्द्राय महात्मने।
श्रीरंगवासिने भूयान्नित्यश्रीर्नित्यमंगलम् ॥२४॥

मंगलं यतिराजाय श्रीभाष्यामृतदायिने।
सौलभ्यपरिपूर्णाय महापूर्णाय मंगलम् ॥२५॥

मंगलं गुरुवर्य्याय मंगलं गुणसिन्धवे।
वादिभीतिकरार्य्याय नित्यश्रीर्नित्यमंगलम् ॥२६॥

जयति यतिराज फणिराज-अवतारमणे।
प्रबलपाषण्डतमहरणभानो विजयी भव विजयी भव विजयी भव ॥२७॥

॥ अथ प्रणाम श्लोक ॥

अमर्यादः क्षुद्रश्चलमतिरसूया प्रसवभूः।
कृतघ्नो दुर्मानी स्मरपरवशोवञ्चनपरः॥
नृशंसः पापिष्ठः कथमहमितो दुःखजलधे-
रपाराइदुत्तीर्णस्तव परिचरेयं चरणयोः ॥२८॥

॥ इति पुष्पाञ्जलिः सम्पूर्णा ॥

## ॥अष्टश्लोकी॥

श्रीपराशरभट्टार्यः श्रीरंगेशपुरोहितः।
श्रीवत्सांकसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे॥
अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत्-

मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम्।
उकारोऽनन्यार्हं नियमयति सम्बन्धमनयो-
स्त्रयीसारस्त्र्यात्मा प्रणव इममर्थं समदिशत्॥१॥
मन्त्रब्रह्मणि मध्यमेन नमसा पुंसः स्वरूपं गति-
र्गम्यं शिक्षितमीक्षितेन पुरतः पश्चादपि स्थानतः।
स्वातन्त्र्यं निजरक्षणं समुचिता वृत्तिश्च नान्योचिता
तस्यैवेति हरेर्विविच्य कथितं स्वस्यापि नार्हं ततः॥२॥
अकारार्थायैव स्वमहमथ मह्यं न निवहा
नाराणां नित्यानामयनमिति नारायणपदम्।
यमाहास्मै कालं सकलमपि सर्वत्र सकला-
स्ववस्थास्वाविःस्युर्मम सहजकैंकर्यविधयः॥३॥
देहासक्तात्मबुद्धिर्यदि भवति पदं साधु विद्यात्तृतीयं,
स्वातन्त्र्यान्धो यदि स्यात् प्रथममितरशेषत्त्वधीश्चेद्द्वितीयं
आत्मत्राणोन्मुखश्चेन्नम इति च पदं बान्धवाभासलोलः,
शब्दं नारायणाख्यं विषयचपलधीश्चेच्चतुर्थीं प्रपन्नः॥४॥
नेतृत्वं नित्ययोगं समुचितगुणजातं तनुख्यापनंचो-
पायं कर्तव्यभागं त्वथ मिथुनपरं प्राप्यमेवं प्रसिद्धम्।
स्वामित्वं प्रार्थनां च प्रबलतरविरोधिप्रहाणं दशैतान्।
मन्तारं त्रायते चेत्यधिगतनिगमः षटपदोऽयं द्विखण्डः॥५॥
ईशानां जगतामधीशदयितां नित्यानपायां श्रियं
संश्रित्याश्रयगोचिताखिलगुणस्याङ्घ्री हरेराश्रये।
इष्टोपायतया श्रिया च सहितायात्मेश्वरायार्थये
कर्तुंदास्यमशेषमप्रतिहतं नित्यं त्वहं निर्ममः॥६॥
मत्प्राप्त्यर्थतया मयोक्तमखिलं सन्त्यज्य धर्मं पुन-
र्मामेकं मदवाप्तये शरणमित्यार्तोऽवसायं कुरु।
त्वामेवं व्यवसाययुक्तमखिलज्ञानादिपूर्णो ह्यहं,
मत्प्राप्तिप्रतिबन्धकैर्विरहितं कुर्यां शुचं मा कृथाः॥७॥
निश्चित्य त्वदधीनतां मयि सदा कर्माद्युपायान् हरे
कर्तुंत्यक्तुमपिप्रपत्तु मनलं सीदामि दुःखाकुलः।
एतज्ज्ञानमुपेयुषो मम पुनः सर्वापराधक्षयं।
कर्तासीति दृढोऽस्मि ते तु चरमं वाक्यं स्मरन् सारथेः॥८॥

॥ इत्यष्टश्लोकी समाप्ता ॥

# ॥अथ श्रीकेशलेशसदननित्यपाठः॥

॥ अथ वरदवल्लभास्तोत्रम् ॥

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥
कान्तस्ते पुरुषोत्तमः फणिपतिः शय्यासनं वाहनं
वेदात्मा विहगेश्वरो यवनिका माया जगन्मोहिनी ।
ब्रह्मेशादिसुरव्रजः सदयितस्त्वद्दासदासीगणः
श्रीरित्येव च नाम ते भगवती ब्रूमः कथं त्वां वयम् ॥१ ॥
यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपिप्रभु-
र्नालंमातुमियत्तया निरवधिंनितयानुकूलं स्वतः ।
तां त्वां दास इति प्रपन्न इति च स्तोष्याम्यहं निर्भयो
लोकैकेश्वरी लोकनाथदयिते दान्ते दयान्ते विदन् ॥२ ॥
ईषत्त्वत्करुणानिरीक्षणसुधासन्धुक्षणाद्रक्ष्यते
नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम् ॥
श्रेयो नह्यरविन्दलोचनमनः कान्ताप्रसादादृते
संसृत्याक्षरवैष्णवाध्वसुनृणां सम्भाव्यते कर्हिचित् ॥३ ॥
शांतानन्तमहाविभूतिपरमं यद्ब्रह्मरूपं हरे-
र्मूर्तं ब्रह्म ततोऽपि यत्प्रियतरं रूपंयदत्यंद्भुतम् ।
यान्यन्यानि यथासुखं विहरतो रूपाणि सर्वाणि तान्याहुः
स्वैरनुरूपरूपविभवैर्गाढोपगूढानि ते ॥४ ॥
आकारत्रयसंपन्नामरविन्दनिवासिनीम् ॥
अशेषजगदीशित्रीं वन्दे वरदवल्लभाम् ॥५ ॥
आकारत्रयसंपन्नमरविन्दनिवासिनीम् ॥
अशेषजगदीशित्रीं वन्दे वरदल्ल्भाम् ॥

॥ इति श्री वरदवल्लभास्तोत्रम् संपूर्णम् ॥

श्रीरङ्गमङ्गलमहोत्सववर्द्धनाय
वेदान्तपान्थपरमार्थसमर्थनाय।
कैङ्कर्यलक्षणविलक्षणमोक्षभाजो
रामानुजो विजयते यतिराजराजः ॥१॥

श्रीरंगमंगलमणिं करुणानिवासं
श्रीवेंकटाद्रिशिखरालयकालमेघम्।
श्रीहस्तिशैलशिखरोज्ज्वलपारिजातं
श्रीशंनमामि शिरसा यदुशैलदीपम् ॥२॥

काषायशोभिकमनीयशिखानिवेशं
दण्डत्रयोज्ज्वलकरं विमलोपवीतम्।
उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं
रूपं तवास्तु यतिराजदृशोर्ममाग्रे ॥३॥

भक्तामृतं विश्वजनानुमोदनं
सर्वार्थदं श्रीशठकोपवाङ्मयम्।
सहस्रशाखोपनिषत्समागमं
नमाम्यहं द्राविडवेदसागरम् ॥४॥

नमामि रामानुजपादपंकजं
वदामि रामानुजनामनिर्मलम्।
स्मरामि रामानुजदिव्यविग्रहं
करोमि रामानुजदासदास्यताम् ॥५॥

रामानुजस्य पदपंकजमाश्रयामि
रामानुजस्य करुणामनुसंदधामि।
रामानुजस्य जनपादरजो वहामि
रामानुजाय नम इत्यनिशं वदामि ॥६॥

बौद्धान्धकारपरिहारदिवाकराय
श्रीवैष्णवाम्बुनिधिपूर्णनिशाकराय।
अद्वैतवादिकरियूथमृगाधिपाय
तस्मै नमोस्तु सततं यतिपुङ्गवाय ॥७॥

त्रिदण्डहस्तं सितयज्ञसूत्रं
काषायवस्त्रं लसदूर्ध्वपुण्ड्रम्।
रथाङ्गशङ्खाङ्कितबाहुमूलं

रामानुजार्यं शरणं प्रपद्ये ॥८ ॥

मन्दाकिनीसलिलसिक्तपदारविन्दं-
दिव्याब्जचक्रसुगदाप्तकरारविन्दम्।
ब्रह्मेशशेषविहगेशसमर्चिताङ्ग-
सिद्धाश्रमस्थमनिशं भगवन्तमीडे ॥९ ॥

साकेते कटरापणे सुललिते दक्षे सरय्वास्तटे।
भव्येनव्यसुकोशलेशसदने शान्ताकृमिं सुन्दरम्।
दिव्यं तं विवुधेश्वरार्चितपदं कोदण्डपाणिं प्रभुम्।
सीतालक्ष्मणवातजातसहितम् श्रीरामचन्दगं भजे ॥१० ॥

विख्याते डेहरीपुरे सुललिते विन्ध्योत्तरे पावने।
सव्ये शोणतटे यतीन्द्रकलितं रुक्माञ्चितम् सुन्दरम्॥
श्रीवत्सांककिरीकुण्डलधरं तूणीरचापान्वितम्।
सीतालक्ष्मणवातजातविजयश्रीराघवं संश्रये ॥११ ॥

वेदान्तदेशिककटाक्षविवृद्वबोधं
कान्तोपयंतृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम् ॥१२ ॥

श्रीवत्सवंशाम्बुधिपूर्णचन्द्रं
श्रीश्रीनिवसार्यगुरोस्तनूजम्।
तत्प्राप्तवेदान्युगार्थसार-
मनन्तवर्यं प्रणमामि नित्यम् ॥१३ ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं
श्रीकृष्णसूरिपदपंकजभृङ्गराजम्।
श्रीरंगवेङ्कटगुरूत्तमलब्धबोधम्
भक्त्या भजामि गुरुवर्यमनन्तसूरिम् ॥१४ ॥

श्रीवादिभीकरगुरूत्तमवंशसिन्धु-
शीतांश्वनन्तुगुरुवर्यपदाब्जभृङ्गम्।
श्रीगौतमान्वयपयोनिधिपूर्णचन्द्रं
श्रीश्रीपतिं गुरुवरं शरणं प्रपद्ये ॥१५ ॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्रं
श्रीपत्यभिख्यगुरुवर्यपदाब्जभृङ्गम्।

शान्त्यादिसद्गुणनिधिं परमार्थनिष्ठं
नौम्यच्युतं गुरुवरं शिरसा सदाऽहम् ॥१६॥

अच्युतार्यपदाम्भोजचञ्चरीकायितान्तरम्
कान्यकुब्जकुलोत्पन्नं विष्णुचित्तं गुरुम्भजे ॥१७॥

श्रीकान्यकुब्जकुलवारिधिपूर्णचन्द्रं
श्रीविष्णुचित्तगुरुवर्यपदाब्जभृङ्गम्।
ज्ञानादिसद्गुणगणौघमहाम्बुराशिं
ध्यायामि साधुशरणाख्यगुरुं सदाऽहम् ॥१८॥

श्रीवत्सवंशकलशोदधिपूर्णचन्द्र-
मार्यस्य साधुशरणस्य कृपैकपात्रम्।
ज्ञानादिसद्गुणनिधिं करुणानिधानं
श्रीरामकृष्णगुरुवर्यमहं प्रपद्ये ॥१९॥

काषायं यज्ञसूत्रं शुचिवपुषि तथा चोर्ध्वपुण्ड्रं च भाले।
यस्यास्ते दक्षहस्ते कलिकुमतिगिरीन्द्रेन्द्रवज्रं त्रिदण्डम्।
संसाराग्निप्रशान्त्यैभृतजलममलम् दारुपात्रं पवित्रम्,
श्रीविष्वक्सेनसूरेः पदकमलयुगं श्रेयसे संश्रयामि ॥२०॥

श्रीमते रम्यजामातृमुनीन्द्राय महात्मने
श्रीरङ्गवासिने भूयान्नित्यश्रीर्नित्यमङ्गलम् ॥२१॥

मंगलं यतिराजाय श्रीभाष्यार्थप्रदायिने
सौलभ्यपरिपूणार्य महापूर्णाय मङ्गलम् ॥२२॥

मंगलम् गुरुवर्याय मंगलं गुणसिन्धवे
वादिभीतिकरार्याय नित्यश्रीर्नित्यमंगलम् ॥२३॥

जयतियतिराज फणिराज अवतारमणे प्रबलपाषण्ड-
तमहरणभानो विजयी भव विजयी भव विजयी भव॥



## ॥अथालवन्दारस्तोत्रम्॥

स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम्।
स्तोत्रयामास योगीन्द्रस्तं वन्दे यामुनाह्वम् ॥१॥

नमो नमो यामुनाय यामुनाय नमो नमः।
नमो नमो यामुनाय यामुनाय नमो नमः ॥२॥
नमो यामुनपादाब्जरेणुभिः पावितात्मने।
विदिताखिलवेद्याय गुरवे विदितात्मने ॥३॥
नमोऽचिंत्याद्भुताक्लिष्टज्ञानवैराग्यराशये।
नाथाय मुनयेऽगाधीभगवद्भक्तिसिंधवे ॥४॥
तस्मै नमो मधुजिदंघ्रिसरोजतत्वज्ञानानुरागमहिमातिशयांतसीम्ने।
नाथाय नाथमुनयेऽत्र परत्र चापि नित्यं यदीयचरणौ शरणं मदीयम् ॥५॥
भूयो नमोऽपरिमिताच्युतभक्तितत्वज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः।
लोकेऽवतीर्णपरमार्थसमग्रभक्तियोगायनाथमुनये यमिनां वराय ॥६॥
तत्त्वेन यश्चिदचिदीश्वरतत्स्वभाव भोगापवर्गतदुपायगतीरुदारः।
संदर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥७॥
मातापियुवतयस्तयाविभूतिः सर्वं यदेव नियमेन मदन्वयानाम्।
आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदंघ्रियुगलं प्रणमामि मूर्ध्ना ॥८॥
यन्मूर्ध्निमेश्रुतिशिरस्सु च भाति यस्मिन्नस्मन्मनोरथपथः सकलः समेति।
स्तोष्यामि नः कुलधनं कुलदैवतं तत्पादारवि न्दमरविन्दविलोचनस्य ॥९॥
तत्त्वेन यस्य महिमार्णवशीकराणुःशक्यो न मातुमपिशर्वपितामहाद्यैः।
कर्तुतदीयमहिमस्तुतिमुद्यताय मह्यं नमोस्तु कवये निरपत्रपाय ॥१०॥
यद्वाश्रमावधियथामतिवाप्यशक्तः स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः।
वेदाश्चतुर्मुखमुखाश्चमहार्णवान्तः कोमञ्जतोरणुकुलाचलयोर्विशेषः ॥११॥
किंचैषशक्त्यतिशये ननु तेऽनुकंप्यः स्तोतापितुस्तुतिकृतेन परिश्रमेण।
तत्र श्रमस्तु सुलभो मम मंदबुद्धेरित्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥१२॥
नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो भवितुमेव कुतः प्रवृतिः।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन्नचित्रमिदमाश्रितवत्सलत्वम् ॥१३॥
स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः।
ब्रह्मा शिवः शतमुखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥१४॥
कः श्रीः श्रियः परमसत्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः।
कस्यायुतायुत-शतैककलांशकांशे विश्वंविचित्रचिदचित्प्रविभागवृत्तम् ॥१५॥
वेदापहागुरुपातकदैत्यपडाद्यापद्विमोचनमहिष्ठ-फलप्रदानैः।
कोऽन्यः प्रजापशुपतिः परिपाति कस्य पादोदकेन स शिवः स्वशिरोधृतेन ॥१६॥

कस्योदरे हर विरञ्चिमुख:प्रपंच: कोरक्षतीममजनिष्ट च कस्य नाभे:।
क्रान्त्वा निगीर्यपुनरुद्गिरतित्वदन्य: क: केन चैष: परवानिति शक्यशंक: ॥१७॥
त्वां शीलरुपचरितै: परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रै:।
प्रख्यातदैवपरमार्थविदांमतैश्चनैवासुरप्रकृतय: प्रभवन्ति बोद्धुम् ॥१८॥
उल्लंघितत्रिविधसीमसमातिशायिसंभावनं तव परिव्रढिमस्वभावम्।
मायाबलेन भवतापि निगूह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावा: ॥१९॥
यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च।
गुणा: प्रधानं पुरुष: परं पदं परात्परं ब्रह्म च ते विभूतय: ॥२०॥
वशी वदान्यो गुणवानृजु: शुचिर्मृदुर्दयालुर्मधुर: स्थिर: सम:।
कृती कृतज्ञस्त्वमसि स्वभावत:समस्तकल्याणगुणामृतोदधि: ॥२१॥
उपर्युपर्य्यब्जभुवोऽपि पुरुषान् प्रकल्प्य ते ये शतमित्यनुक्रमात्।
गिरस्त्वदेकैकगुणावधीप्सया सदा स्थितानोद्यमतोऽतिशेरते ॥२२॥
त्वदाश्रितानां जगदुद्भवस्थितिप्रणाश संसारविमोचनादय:।
भवन्ति लीलाविधयश्चवैदिकास्त्वदीय गम्भीरमनोनुसारिण: ॥२३॥
नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये।
नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे ॥२४॥
न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे।
अकिंचनोऽनन्यगति: शरण्यं त्वत्पाद्मूलं शरणं प्रपद्ये ॥२५॥
न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि।
सोऽहंविपाकावसरे मुकुन्द क्रन्दामि संप्रत्यगतिस्तवाग्रे ॥२६॥
निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूलमिवासि लब्ध:।
त्वयापिलब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयाया: ॥२७॥
अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दु:खम्।
किंतु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूप: ॥२८॥
निरासकस्यापि न तावदुत्सहे महेश हातुं तव पादपङ्कजम्।
रुषा निरस्तोऽपि शिशु: स्तनन्धयो न जातु मातुश्चरणौ जिहासति ॥२९॥
तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं हि वीक्षते ॥३०॥
त्वदङ्घ्रिमुद्दिश्य कदापि केनचिद्यथा तथा वापि सकृत्कृतोञ्जलि:।
तथैव मुष्णात्यशुभान्यशेषत: शुभानि पुष्णाति न जातु हीयते ॥३१॥
उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम्।

प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिंधुशीकर: ॥३२॥
विलासविक्रांतपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम्।
धनं मदीयं तव पादपंकजं कदा नु साक्षात्करवाणि चक्षुषा॥३३॥
कदा पुन: शंखरथाङ्गकल्पकध्वजारविन्दांकुशवज्रलाच्छनम्।
त्रिविक्रम त्वच्चरणाम्बुजद्वयं मदीयमूर्द्धानमलंकरिष्यति॥३४॥
विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम्।
निमग्ननाभिं तनुमध्यमुल्लसद्विशालवक्ष:स्थलशोभिलक्षणम्॥३५॥
चकासतं ज्याकिणकर्कशै: शुभैश्चतुर्भिराजानुविलंबिभिभुजै:।
प्रियावतंसोत्पलकर्णभूषणश्लथालकाबंधविमर्दशंसिभि: ॥३६॥
उदग्रपीनांसविलम्बिकुंडलालकावलीबन्धुरकम्बुकन्धरम्।
मुखश्रियान्यक्कृतपूर्णनिर्मलामृतांशुबिंबाम्बुरुहोज्ज्वलश्रियम्॥३७॥
प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रू लतमुज्ज्वलाधरम्।
शुचिस्मितं कोमलगण्डमुन्नसंललाटपर्यंतविलंबितालकम्॥३८॥
स्फुरत्कीरीटांगदहारकंठिकामणीन्द्रकाञ्ची गुणनूपुरादिभि:।
रथांगशंखासिगदाधनुर्वरैर्ल्लसत्तुलस्या वनमालयोज्ज्वलम्॥३९॥
चकर्थ यस्या भवनंभुजान्तरं तवप्रियं धाम यदीयजन्मभू:।
जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च॥४०॥
स्ववैश्वरूपेण सदानुभूतयाप्यपूर्ववद्विस्मयमादधानया।
गुणेन रूपेण विलासचेष्टितै: सदा तवैवोचितया तव श्रिया॥४१॥
तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि॥
फणामणिव्रातमयूखमंडलप्रकाशमानोदरदिव्यधामनि॥४२॥
निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभि:॥
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष ईतीर्यते जनै:॥४३॥
दास: सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमय:।
उपस्थितं तेन पुरोगरुत्मता त्वदङ्घ्रिसम्मर्दकिणांकशोभिना॥४४॥
त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा।
प्रियेण सेनापतिना निवेदितं तथानुजानन्तमुदारवीक्षणै:॥४५॥
हताखिलक्लेशमलै: स्वभावत:सदानुकूल्यैकरसैस्तवोचितै:।
गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम्॥४६॥
अपूर्वनानारसभावनिर्भरप्रबुद्धया मुग्धविदग्धलीलया।
क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम्॥४७॥

अचिंत्यदिव्याद्भुतनित्ययौवन-स्वभावलावण्यमयामृतोदधिम्।
श्रियः श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थि कल्पकम्।।४८।।
भवन्तमेवानुचरन्निरन्तरं प्रशांतनिःशेषमनोरथान्तरः।
कदाहमैकांतिकनित्यकिंकरः प्रहर्षयिष्यामि सनाथजीवितम्।।४९।।
धिगशुचिमविनीतं निर्दयं मामलज्जं परमपुरुष योऽहं योगिवर्याग्रगण्यैः।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तरदूरं तव परिजनभावं कामये कामवृत्तः।।५०।।
अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरू।।५१।।
अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणी।
भगवन्भव दुर्दिने पथस्खलितं मामवलोकयाच्युत।।५२।।
नमृषा परमार्थमेव मे श्रृणु विज्ञापनमेकमग्रतः।
यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ दुर्लभः।।५३।।
तदहं त्वदृते न नाथवान्मदृतेत्वं दयनीयवान्न च।
विधिनिर्मितमेतदन्वयं भगवन् पालय मास्म जीहपः।।५४।।
वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथा तथाविधः।
तदहं तव पादपद्मयोरहमद्यैव मया समर्पितः।।५५।।
मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव।
नियतः स्वमिति प्रबुद्धधीरथवा किंनु समर्पयामि ते।।५६।।
अवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम्।
कृपयैवमनन्यभोग्यतां भगवन् भक्तिमपि प्रयच्छ मे।।५७।।
तव दास्यसुखैकसंगिनां भवनेष्वस्त्वपि कीटजन्म मे।
इतरावसथेषु मा स्मभूदपि मे जन्म चतुर्मुखात्मना।।५८।।
सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः।
महात्मभिर्मामवलोक्य तां नय क्षणेऽपि ते यद्विरहोऽतिदुः सहः।।५९।।
न देहं न प्राणान्न सुखमशेषाभिलषितं न चात्मानं नान्यत्किमपि तव शेषत्वविभवात्।
वहिर्भूतं नाथ क्षणमपि सहे यातु शतधा, विनाशं तत्सत्यं मधुमथन विज्ञापनमिदम्।।६०।।
दुरन्तस्यानादेरपरिहरणीयस्य महतो विहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि।
दयासिन्धो बन्धो! निरवधिकवात्सल्यजलधे तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः।।६१।।
अनिच्छन्नप्येवं यदि पुनरपीच्छन्निव रजस्तमच्छन्नच्छद्मस्तुतिवचनभंगीमरचयम्।
तथापीत्थं रूपं वचनमवलम्ब्यापिकृपया त्वमेवैवं भूतं धरणिधर मे शिक्षय मनः।।६२।।

पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्त्वमेव त्वं मित्रं गुरुरपि गतिश्चापि जगताम्।
त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥६३॥
जनित्वाहं वंशे महति जगतिख्यातयशसां शुचीनां युक्तानां गुणपुरुषतत्त्वस्थितिविदाम्।
निसर्गादेव त्वच्चरणकमलैकांत मनसामधोधः पापात्मा शरणद निमज्जामि तमसि ॥६४॥
अमर्यादः क्षुद्रश्चलमतिरसूया प्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेरपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥६५॥
रघुवर यदभूस्त्वं तादृशो वायसस्य प्रणत इति दयालुर्यस्य चैद्यस्य कृष्ण।
प्रतिभवमपराद्धुर्मुग्धसायुज्यदोभूर्वद किमु पदमार्गस्तस्य तेऽस्तिक्षमायाः ॥६६॥
ननु प्रपन्नः सकृदेव नाथ तवाहमस्मीति च याचमानः।
तवानुकम्प्यः स्मरतः प्रतिज्ञां मदेकवर्ज्यं किमिदं व्रतं ते ॥६७॥
अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम्।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृतमचिन्तयित्वा ॥६८॥
यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥६९॥

॥ इति यामुनाचार्यविरचितमालवन्दारस्तोत्रं सम्पूर्णम् ॥

## ॥अथ नारायणाष्टकम्॥

श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधिमहि।
यदुक्तयस्त्रयीकण्ठे यान्ति मंगलसूत्रताम्॥

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्य्यादघशोषणादगणितश्रेयः पदप्रापणात्। सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्याध्रुवः ॥१॥

प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तंभे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः। वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्नार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥२॥

श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम्। इत्युक्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्त्तत्राणपरायणः

स भगवान्नारायणो मे गतिः ॥३॥

नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भोः सुरा रक्षन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः। मा भैषीरिति तस्य नक्रहनने चक्रायुधः श्रीधरो ह्यार्त्तत्राणपरासयणः स भगवान्नारायणो मे गतिः ॥४॥

भोः कृष्णाच्युत भोः कृपालय हरे भोः पाण्डवानां सखे, क्वासि क्वासि सुयोधनाद्यपहृतां भो रक्ष मामातुराम्। इत्युक्तोऽक्षयवस्त्रसंभृततनुर्योऽपालयद्द्रौपदी-मार्त्तत्राणपरायणः सः भगवान्नारायणो मे गतिः ॥५॥

यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं, यन्नामामृतपूरकं च पिबतां संसारसंतारकम्। पाषाणोऽपि यदङ्घ्रिपङ्करजसा शापान्मुनेर्मोचितो ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥६॥

पित्राभ्रातरमुत्तमासनगतं ह्यौत्तानपादिर्ध्रुवो दृष्ट्वा तत्समारुरुक्षुरधिकं मात्राऽवमानं गतः। यं गत्वा शरणं यदाप तपसा हेमाद्रिसिंहासनं, ह्यार्त्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥७॥

आर्त्ता विषण्णाः शिथिलाश्चभीता घोरेषु च व्याधिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥८॥

॥ इति नारायणाष्टकं सम्पूर्णम्॥

## ॥अथ भवमंगलाष्टकम्॥

श्रीमान् वेंकटनाथार्य कवितार्किककेशरी।

वेदान्ताचार्यवर्य्यो मे सन्निधतां सदा हृदि।

श्रीरंगं करिशैलमञ्जनगिरौ शेषाद्रिसिंहाचलं श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिषम्। श्रीमद्द्वारवतीप्रयागमथुरायोध्यागयापुष्करं शालग्रामनिवासिना विजयते रामानुजोऽयं मुनिः ॥१॥

सर्वेषां कृतिनां चरन्ति गुरवः कैङ्कर्यनिष्ठाहरेःश्रीरानुजयोगिनायकमणिः श्रीपादपद्मालयः। भोग्याष्टाक्षरमंत्ररत्नचरमश्लोकानुसन्धायिनो वंद्या भागवतोत्तमाः प्रतिदिनं कुर्वन्तु मे मंगलम् ॥२॥

स श्रीमान्परमः पुमानथचतुर्व्यूहावतारास्ततो जाता व्यूहपरंपराःसुरचिताः श्रीकेशवाद्याः पराः। एकाम्भोनिधिशेषभोगशयनन्यग्रोधपत्राश्रय क्षीरोदन्वदनन्ततल्प

सुखदाः कुर्वन्तु मे मङ्गलम् ॥३॥

श्रीरामानुजयोगिपूर्णयमुनावास्तव्यमालाधरानाथः कारितनूजसैन्यपरमः श्रीमांश्च नारायणः। चण्डाद्याः कुमुदादयः परिजना नित्याश्च मुक्ताश्च ये श्रीवैकुण्ठनिवासिनोऽमरवराः कुर्वन्तु मे मङ्गलम् ॥४॥

मत्स्यः कूर्मवराहमानवहरिश्रीवामनो भार्गवः श्रीरामोवसुदेवदेवकिसुतः कल्की दशैते क्रमात्। अन्तर्याम्यथयोगिनां हृदयगोप्याचर्यावताराः शुभाः श्रीरंगादिसमस्तधामनिलयाः कुर्वन्तु मे मङ्गलम् ॥५॥

श्रीभूमिर्विमलादयो नयसुधापद्माधृताः शक्तयो वेदा वेदवती धरापि च महालक्ष्मीः सुकेशालया। देवी भार्गवभामिनी जनकजा सा रेवती रुक्मिणी वेदाद्या प्रभयान्विता दशरमाः कुर्वन्तु मे मंगलम् ॥६॥

शत्रुध्वंसिसुदर्शनं सुखकरं श्रीपाञ्चजन्यः सदा बाणाः शार्ङ्गममर्षहर्षजनकं कौमोदकी नन्दकः। सत्पद्मं मुसलं हलं च परशुर्दिव्यायुधानि, प्रभोः सेनाधीशखगेशभोगिपतयः कुर्वन्तु मे मंगलम् ॥७॥

हंसो धर्मनिदर्शनो हरिमुखो यज्ञश्च धन्वन्तरिः पाथोऽजो मिथुनोदितो हरिरलंकारः पृथिव्या पृथुः। आद्यो वेदमुखश्च जन्मनिलयो नारायणो वै विराट् श्वेतद्वीपनिवासिजीवहृदयः कुर्वन्तु नो मंगलम् ॥८॥

विष्वक्सेनमुनिर्ह्यनन्तमुनयः श्रीसंप्रदायादिमा येऽन्येभूतभविष्यदृश्यसमये श्रीरंगभूभूषणाः। ये वै भागवताः सुखा दशगणाभृत्या नरा वानराः श्वेतद्वीपनिवासिनो नरवराः कुर्वन्तु नो मंगलम् ॥९॥

इत्युक्तं भवमंगलाष्टकमिदं सुश्लोकसंकीर्तनं श्रीमद्भागवतप्रसादजनकं श्रीवेङ्कटशेन यत्। भक्ता ये प्रपठन्ति शुद्धमनसः प्रोत्फुल्लहृत्पंकजास्तेषां वाञ्छितमंगलम् प्रकुरुते भक्तिप्रियो माधवः ॥१०॥

## ॥अथ श्रीश्रीस्तवः॥

श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधिमहि।
यदुक्तयस्त्रयीकण्ठे यान्ति मंगलसूत्रताम्॥

स्वस्ति श्रीर्दिशतादशेषजगतां सर्गोपवर्गस्थितीः स्वर्गं दुर्गतिमापवर्गिकपदं सर्वं च कुर्वन् हरिः। यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलं क्रीडेयं खलु नान्यथाऽस्य रसदा स्यादैकरस्यात्तया ॥१॥

हे श्रीर्देवि समस्तलोकजननीं त्वां स्तोतुमीहामहे युक्तां भावय भारतीं प्रगुणय

प्रेमप्रधानां धियम्। भक्तिं वर्धय नंदयाश्रितमिमं दासं जनं तावकं लक्ष्यं लक्ष्मिकटाक्षवीचिविसृतेस्ते स्याम चामी वयम् ॥२॥

स्तोत्रं नाम किमानन्ति कवयो यद्यन्यदीयान् गुणानन्यत्रत्वसतोऽधिरोप्य भणितिः सा तर्हि वन्ध्या त्वयि। सम्यक्सत्यगुणाभिवर्णनमथो ब्रूयुः कथं तादृशी वाग् वाचस्पतिनापि शक्यरचना त्वत्सद्गुणार्णोनिधौ ॥३॥

ये वाचां मनसा च दुर्ग्रहतया ख्याता गुणास्तावकास्तानेव प्रति साम्बुजिह्वमुदिता यन्मामिका भारती। हास्यं तत्तु न मन्महे नहि चकोर्येकाखिलां चन्द्रिकां नालं पातुमिति प्रगृह्य रसनामासीत सत्यां तृषि: ॥४॥

क्षेदीयानपि दुष्टबुद्धिरपि निःस्नेहोऽप्यनीहोऽपि ते कीर्तिं देवि लिहन्नहं न च विभेम्यज्ञो न जिह्रेमिच। दुष्येत्सातु न तावता नहि शुनालीढाऽपि भागीरथी दुष्येच्छ्वापि न लज्जते न च विभेत्यार्तिस्तु शाम्येच्छुनः ॥५॥

ऐश्वर्यं महदेव वाल्पमथवा दृश्येत पुंसां हि यत्तल्लक्ष्म्याः समुदीक्षणात्तव यतः सार्वत्रिकं वर्त्तते। तेनैतेन न विस्मयेमहि जगन्नाथोऽपि नारायणोधन्यं मन्यत ईक्षणात्तव यतः स्वात्मानमात्मेश्वरः ॥६॥

ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्य्यलावण्ययोरूपं यच्च हि मंगलं किमपि यल्लोके सदित्युच्यते, तत्सर्वं त्वदधीनमेव हि यतः श्रीरित्यभेदेन वा यद्वा श्रीमदितिदृशेन वचसा देवि प्रथामश्नुते ॥७॥

देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते यद्यप्येवमथापि नैव युवयोः सर्वज्ञता हीयते। यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदुर्व्योमाम्भोजमिदन्तया खलु विदन् भ्रान्तोऽयमित्युच्यते ॥८॥

लोके वनस्पतिवृहस्पतितारतम्यं यस्याः कटाक्षपरिणाममुदाहरंति। सा भारती भगवती तु यदीयदासी तां देवदेवमहिषीं श्रियमाश्रयामः ॥९॥

यस्याः कटाक्षमृदुवीक्षणवीक्षणेन सद्यस्समुल्लसित-पल्लवमु ल्ललास। विश्वं विपर्ययसमुत्थविपर्ययं प्राक् तान्देवदेवमहिषीं श्रियमाश्रयामः ॥१०॥

॥ इति श्रीस्तवः ॥

## ॥अथ पञ्चायुधस्तोत्रम्॥

स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम्। सुरद्विषां प्राणविनाशिविष्णोश्चक्रं सदाहं शरणं प्रपद्ये ॥१॥

विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्प्पहन्ता। तं पाञ्चजन्यं शशिकोटिशुभ्रं शंखं सदाहं शरणं प्रपद्ये ॥२॥

हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलैकहंत्रीम्। वैकुण्ठवामाग्रकराभिमृष्टांगदां सदाहं शरणं प्रपद्ये ॥३॥

रक्षोऽसुराणं कठिनोग्रकण्ठच्छेदक्षरच्छोणितदिग्धारम्। तं नन्दकं नाम हरेः प्रदीप्तं खड्गं सदाहं शरणं प्रपद्ये ॥४॥

यज्ज्यानिनादश्रवणात्सुराणां चेतांसि निर्मुक्तभयानि सद्यः। भवन्ति दैत्याशनिबाणवर्षिशार्ङ्गंसदाहंशरणं प्रपद्ये ॥५॥

इमं हरेःपञ्चमहायुधानां स्तवंपठेद्योऽनुदिनंप्रभाते। समस्तदुःखानि भयानि सद्यः पापानि नश्यन्ति सुखानि सन्ति ॥६॥

वने रणे शत्रुजलाग्निमध्ये यदृच्छयापत्सु महाभयेषु। इदं पठन्स्तोत्रमनाकुलात्मा सुखीभवेत्तत्कृतसर्वरक्षः ॥७॥

भोगे रोगभयं सुखे क्षयभयं वित्ते च राज्ञोभयंविद्यायां कलिभीस्तपे करणभी रूपाद्भयं योषिति। इष्टे शोकभयं रणे रिपुभयं काये कृतान्ताद्भयं चेतीं जन्म निरर्थकं क्षितितले विष्णोः पदं निर्भयम् ॥८॥

॥ इति पञ्चायुधस्तोत्रं सम्पूर्णम् ॥

## ॥अथ पञ्चघाटी॥

श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधिमहि।
यदुक्तयस्त्रयीकण्ठे यान्ति मंगलसूत्रताम्।

पाषण्डद्रुमषण्डदावदहनश्चार्वाकशैलाशनिर्बौद्धध्वांतनिरासवासरपतिर्जैनेभकण्ठीरवः। मायावादिभुजंगभंगगरुडस्त्रैविद्यचूडामणिः श्रीरंगेशजयध्वजो विजयते रामानुजोऽयं मुनिः ॥१॥ पाषण्डषण्डगिरिखण्डनवज्रदण्डाः प्रच्छन्नबौद्धमकरालयमन्थदण्डाः वेदार्थसारमुखदर्शनदीपदण्डा रामानुजस्य विलसन्ति मुनेस्त्रिदण्डाः ॥२॥ चारित्रोद्धारदण्डं चतुरनयपथालंक्रियाकेतुदण्डं–सद्विद्यादीपदण्डं सकलकलिकथासंहृतेः कालदण्डम्। त्रय्यंतालम्बदण्डं त्रिभुवनविजय–च्छत्रसौवर्णदण्डं धत्ते रामानुजार्यःप्रतिकथकशिरोवज्रदंडंत्रिदंडम् ॥३॥ त्रय्या माङ्गल्यसूत्रं त्रियुगयुगपथारोहणालम्बसूत्रं सद्विद्यादीपसूत्रं सगुणनायकथासंपदां हारसूत्रम्। प्रज्ञासूत्रं

बुधानां प्रशमधनमनः पद्मिनीनालसूत्रं रक्षासूत्रं यतीनां जयति यतिपतेर्वक्षसि ब्रह्मसूत्रम् ॥४॥ पाषण्डसागरमहावडवामुखाग्निः श्रीरंगराजचरणा म्बुजमूलदासः। श्रीविष्णुलोकमणिमण्डपमार्गदायी रामानुजो विजयते यतिराजरातः ॥५॥

॥ इति पञ्चघाटी सम्पूर्णा ॥

## ॥अथ पूर्वदिनचर्या॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम्।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥१॥
अङ्केकवेरकन्यायास्तुङ्गेभुवनमंगले।
रंगेधाम्नि सुखासीनं वन्दे वरवरं मुनिम् ॥२॥
मयि प्रविशति श्रीमन्मन्दिरं रंगशायिनः।
पत्युः पदाम्बुजं द्रष्टुमायान्तमविदूरतः ॥३॥
सुधानिधिमिव स्वैरस्वकृतोदग्रविग्रहम्।
प्रसन्नर्कप्रतीकाशप्रकाशपरिवेष्टितम् ॥४॥
पार्श्वतः पाणिपद्माभ्यां परिगृह्य भवत्प्रियौ।
विन्यस्यन्तं शनैरंघ्री मृदुलौ मेदिनीतले ॥५॥
अम्लानकोमलाकारमाताम्रविमलाम्बरम्।
आपीनविपुलोरस्कमाजानुभुजभूषणम् ॥६॥
मृणालतन्तुसन्तानसंस्थानधवलत्विषा।
शोभितं यज्ञसूत्रेण नाभिविम्बसनाभिना ॥७॥
अम्भोजबीजमालाभिरभिजातभुजांतरम्।
ऊर्ध्वपुण्ड्रैरुपश्लिष्टमुचितस्थानलक्षणैः ॥८॥
काश्मीरकेशरस्तोमकडारस्निग्धरोचिषा।
कौशेयेन समिंधान स्कन्धमूलावलंबिना ॥९॥
मंत्ररत्नानुसन्धानसन्ततस्फुरिताधरम्।
तदर्थतत्त्वनिध्यानसन्नद्धपुलकोद्गमम् ॥१०॥
स्ययमानमुखाम्भोजे दयमानदृगञ्चलम्।
मयिप्रसादप्रवणं मधुरोदारभाषणम् ॥११॥
आत्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चयात्।

अङ्गीकर्तुमिवप्राप्तमकिञ्चनमिमं जनम्॥१२॥
भवन्तमेव नीरन्ध्रं पश्यन्वश्येन चेतसा।
मुने वरवरस्वामिन् मुहुस्त्वामेव कीर्तयन्॥१३॥
त्वदन्यविषयस्पर्शविमुखैरखिलेन्द्रियैः।
भवेयं भवदुःखानामसह्यानामनास्पदम्॥१४॥
परेद्युः पश्चिमे यामे यामिन्याः समुपस्थिते।
प्रबुद्धय शरणं गत्वा परां गुरुपरम्पराम्॥१५॥
ध्यात्वा रहस्यत्रितयं तत्त्वयाथात्म्यदर्पणम्।
परव्यूहादिकान्पत्युः प्रकारान्प्रणिधाय च॥१६॥
ततः प्रत्युषसि स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः।
यतीन्द्रचरणद्वन्द्वप्रवणेनैव चेतसा॥१७॥
अथ रङ्गनिधिं सम्यगभिगम्य निजं प्रभुम्।
श्रीनिधानं शनैस्तस्य शोधयित्वा पदद्वयम्॥१८॥
ततस्तत्सन्निधिस्तम्भमूलभूतलभूषणम्।
प्राङ्मुखं सुखमासीनं प्रसादमधुरस्मितम्॥१९॥
भृत्यैः प्रियाहितैकाग्रैः प्रेमपूर्वमुपासितम्।
तत्प्रार्थनानुसारेण संस्कारान्संविधाय मे॥२०॥
अनुकम्पापरिवाहैरभिषेचनपूर्वकम्।
दिव्यं पदद्वयं दत्वा दीर्घं प्रणमतो मम॥२१॥
साक्षात्फलैकलक्ष्यत्वप्रतिपत्तिपवित्रितम्।
मंत्ररत्नं प्रयच्छन्तं वन्दे वरवरं मुनिम्॥२२॥
ततःसार्द्धंविनिर्गत्य भृत्यैर्नित्यानपायिभिः।
श्रीरंगमङ्गलं द्रष्टुं पुरुषं भुजगेशयम्॥२३॥
महति श्रीमति द्वारे गोपुरं चतुराननम्।
प्रणिपत्य शनैरन्तः प्रविशन्तं भजामि तम्॥२४॥
देवी गोदा यतिपतिशठद्वेषिगौरंगसङ्ग
सेनानाथोविहगवृषभः श्रीनिधिः सिन्धुकन्या।
भूमानीलागुरुजनवृतः पुरुषश्चेत्यमीषा-
नित्यमग्रे वरवरमुनेरङ्घ्रियुग्मं प्रपद्ये॥२५॥
मंगलाशासनं कृत्वा तत्र तत्र यथोचितम्।
धाम्नस्तस्माद्विनिष्क्रम्य प्रविश्य स्वं निकेतनम्॥२६॥

अथ श्रीशैलनाथार्यनाम्नि श्रीमति मण्डपे।
तदङ्घ्रिपंकजद्वन्द्वच्छायामध्यनिवासिनम् ॥२७॥
तत्त्वं दिव्यप्रबन्धानां सारं संसारवैरिणाम्।
सरसं सरहस्यानां व्याचक्षाणं नमामि तम् ॥२८॥
ततः स्वचरणाम्भोजस्पर्शसम्पन्नसौरभैः।
पावनैरर्थिनस्तीर्थैर्भावयन्तं भजामि तम् ॥२९॥
आराध्य श्रीनिधिं पश्चादनुयागं विधाय च।
प्रसादपात्रं मां कृत्वा पश्यन्तं भावयामि तम् ॥३०॥
ततश्चेतः समाधाय पुरुषे पुष्करेक्षणे।
उत्तंसितकरद्वन्द्वमुपविष्टमुपहरे ॥३१॥
अब्जासनस्थमवदातसुजातमूर्तिमामीलिताक्षमनुसंहितमन्त्ररत्नम्।
आनम्रमौलिभिरुपासितमन्तरंगैर्नित्यं मुनिं वरवरं निभृतो भजामि ॥३२॥
ततः शुभाश्रये तस्मिन्निमग्न निभृतं मनः।
यतीन्द्रप्रवणं कर्तुंयतमानं नमामि तम् ॥३३॥

॥ इति पूर्वादिनचर्या सम्पूर्णा ॥

## ॥अथ श्रीयतिराजविंशतिः॥

यः स्तुतिं यतिपतिप्रसादिनीं व्याजहार यतिराजविंशतिम्।
तं प्रपन्नजनचातकाम्बुदं नौमि सौम्यवरयोगिपुङ्गवरम् ॥१॥
श्रीमाधवांघ्रिजलजद्वयनित्यसेवाप्रेमाविलाशयपरांकुशपादभक्तम्।
कामादिदोषहरमात्मयदाश्रितानां रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥२॥
श्रीरंगराजचरणाम्बुजराजहंसं श्रीमत्परांकुशपदाम्बुजभृङ्गराजम्।
श्रीभट्टनाथपरकालमुखाब्जमित्रं श्रीवत्सचिह्नशरणं यतिराजमीडे ॥३॥
वाचा यतीन्द्र मनसा वपुषा च युष्मत्पादारविन्दयुगलं भजतां गुरुणाम्।
कूराधिनाथकुरुकेशमुखाद्यपुंसां पादानुचिन्तनपरः सततं भवेयम् ॥४॥
नित्यं यतीन्द्र तव दिव्यवपुः स्मृतौ मे सक्तंमनो भवतु वाग्गुणकीर्त्तनेऽसौ।
कृत्यं च दास्यकरणं तु करद्वयस्य वृत्त्यन्तरेऽस्तु विमुखं करणत्रयं च ॥५॥
अष्टाक्षराख्यमनुराजपदत्रयार्थनिष्ठां ममात्र वितराद्य यतीन्द्रनाथ।

श्रीमतांधियतमः—

**डॉ. कैलासपति त्रिपाठी**

सहित्यव्याकरणवेदान्ताचार्यः

एम.ए.पी.एच.डी., आचार्य एवं अध्यक्ष

साहित्यविभाग, सङ्कायाध्यक्ष, साहित्य एवं संस्कृति-

सङ्काय, सम्पूर्णानन्द संस्कृत विश्वविद्यालय-वाराणसी



**॥ ३ ॥**

दृढप्रतिज्ञोखलु भीष्मवद्यः, जन-प्रतिज्ञा-परिपूरणाय
स्वकीयसङ्कल्पमहो विहाय, गयामगास्तं शिरसानमामि ॥१ ॥

आमीप्रसिद्धातिप्रसिद्धभूमौ, देव्याः समाराधनहेतवेयः।
यज्ञेनयज्ञं ह्ययजच्च विषवक् सेनंयतीन्द्रं प्रणमामिमूर्ध्ना ॥२ ॥

संस्थपितः वरवननाथवत्यः, आशागजानष्टसुसंख्यकान्वै।
तन्मध्यदीप्तंखलुसेनदेशं, नमामि तं श्रीपतिपीठदेवम् ॥३ ॥

शास्त्रार्थसेवासु महत्प्रवीणं, नवरत्नवत्सौम्यसुधीसमाजः।
विराजतेभारतवर्षदेशे, सेनाधिपंतं प्रणमामिमूर्ध्ना ॥४ ॥

श्रीमतांचरणाब्जञ्चरीक :—

**जगद्गुरु रामानुजाचार्यस्वामी-राघवाचार्यः,**

वेदव्याकरणाचार्यः

गया देवघाट श्रीरामानुचार्य मठस्थः।



शिष्टाग्रगण्यजनसेव्यभवत्पदाब्जे हृष्टाऽस्तु नित्यमनुभूय ममास्य बुद्धिः ॥६॥
अल्पापि मे न भवदीयपदाब्जभक्तिः शब्दादिभोगरुचिरन्वहमेघते ह।
मत्पापमेव हि निदानममुष्य नान्यत्तद्वारयायं यतिराज दयैकसिन्धो ॥७॥
वृत्या पशुर्नरवपुरस्त्वहमीदृशोऽपि श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽयम्।
इत्यादरेण कृतिनोऽपिमिथः प्रवक्तुमद्यापि वञ्चनपरोऽत्र यतीन्द्र वर्ते ॥८॥
दुःखावहोऽहमनिशं तव दृष्टचेष्टः शब्दादिभोगनिरतः शरणागताख्यः।
त्वत्पादभक्त इव शिष्टजनौघमध्ये मिथ्या चरामि यतिराज ततोऽस्मि मूर्खः ॥९॥
नित्यं त्वहं परिभवामि गुरुं च मन्त्रं तद्देवतामपि न किंचिदहोविभेमि।
इत्थं शठोऽप्यशठवद्भवदीयसंघे हृष्टश्चरामि यतिराज ततोऽस्मि मूर्खः ॥१०॥
हा हन्त हन्त मनसा क्रियया च वाचा योऽहं चरामिसततं त्रिविधापचारान्।
सोऽहं तवाऽप्रियकरः प्रियकृद्वदेवकालं नयामि यतिराज ततोऽस्मि मूर्खः ॥११॥
पापे कृते यदि भवन्ति भयानुतापलज्जाः पुनः करणमस्य कथं घटेत।
मोहेन मे न भवतीह भयादिलेशस्तस्मात्पुनः पुनरघं यतिराज कुर्वे ॥१२॥
अन्तर्बहिः सकलवस्तुषु सन्तमीशमंधः पुरः स्थितमिवाहमवीक्षमाणः।
कंदर्पवश्यहृदयः सततं भवामि हन्त त्वदग्रगमनस्य यतीन्द्र नार्हः ॥१३॥
तापत्रयीजनितदुःखनिपातिनोऽपि देहस्थितौ मम रुचिस्तु च तन्निवृत्तौ।
एतस्य कारणमहो मम पापमेव नाथ त्वमेव हर तद्यतिराज शीघ्रम् ॥१४॥
वाचामगोचर महागुण देशिकाग्रय कूराधिनाथ कथिताऽखिलनैच्यपात्रम्।
एषोऽहमेव न पुनर्जनतीदृशस्तद्रामानुजार्यकरुणैव तु मद्गतिस्ते ॥१५॥
शुद्धात्मयामुनगुरुत्तम कूरनाथ भट्टाख्यदेशिकवरोक्तसमस्तनैच्यम्।
अद्यास्त्यसंकुचितमेव मयीह लोके तस्माद्यतीन्द्र करुणेव तु मद्गतिस्ते ॥१६॥
शब्दादिभोगविषयारुचिरस्मदीया नष्टा भवत्विह भवद्दयया यतीन्द्र। त
त्वद्दासदासगणनाचरमावधौ यस्तद्दासतैकरसताऽविरता ममास्तु ॥१७॥
श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः प्रत्यक्षतामुपगतस्त्विह रंगराजः।
वश्यः सदा भवति ते यतिराज तस्माच्छक्तः स्वकीयजनपापविमोचने त्वम् ॥१८॥
कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव।
सा च त्वयेव कमलारमणेऽर्थिता यत्क्षेमः स एव हि यतीन्द्र भवच्छ्रितानाम् ॥१९॥
श्रीमन् यतीन्द्र तव दिव्यपदाब्जसेवां श्रीशैलनाथकरुणापरिणामदत्ताम्।
तामन्वहं मम विवर्द्धय नाथ तस्याः कामं विरूद्धमखिलं च निवर्तय त्वम् ॥२०॥
विज्ञापनं यदिदमद्य तु मामकीनमंगीकुरुष्व यतिराज दयाम्बुराशे।

अज्ञोऽयमात्मगुणलेशविवर्जितश्च तस्मादनन्यशरणोभवतीति मत्वा ॥२१ ॥
इति यति कुलधुर्यमेधमानैः श्रुतिमधुरैरुदितैः प्रहर्षयन्तम्।
वरवरमुनिमेव चिन्तयन्तीमतिरियमेति निरत्ययं प्रसादम् ॥२२ ॥

॥ इति यतिराजविंशतिः सम्पूर्णा ॥

## ॥अथ उत्तरदिनचर्या॥

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पद्।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम्॥
अथ गोष्ठीं गरिष्ठानामधिष्ठाय सुमेधसाम्।
वाक्यालंकृतिवाक्यानि व्याख्यातारं नमामि तम् ॥१ ॥
सायन्तनं ततः कृत्वा सम्यगाराधनं हरेः।
स्वैरालापैः शुभैः श्रोतृन् नंदयन्तं नमामि तम् ॥२ ॥
ततः कनकपर्यंके तरुणद्युमणिद्युतौ।
विशालविगलश्लक्ष्णतुङ्गतूलासनोज्ज्वले ॥३ ॥
समग्रसौरभोद्गारनिरन्तरदिगन्तरे।
सोपधाने सुखासीनं सुकुमारेवरासने।।४ ॥
उन्मीलत्पद्मगर्भद्युतितलमुपरि क्षीरसङ्घातगौरं
राकाचन्द्रप्रकाशप्रचुरनखमणिद्योतविद्योतमानम्।
अंगुल्यग्रेषु किंचिन्नतमतिमृदुलं सौम्यजामातृयोगी दिव्यं त्वत्पादयुग्मं दिशतु शिरसि मे देशिकेन्द्रो दयालुः ॥५ ॥

त्वं मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वं, विद्यावृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम् आत्मा शेषी भवसि भगवन्नान्तरः शासिता त्वं यद्वा सर्वं वरवरमुने यद्यदात्मानुरूपम् ॥६ ॥

अग्रेपश्चादुपरि परितो भूतलं पार्श्वतो मे,
मौलौ वक्रे वपुषि सकले मानसाम्भोरुहे च।
दर्शं दर्शं वरवरमुने दिव्यमङ्घ्रिद्वयं ते,
नित्यं मज्जन्नमृतजलधौ निस्तरेयंभवाब्धिम् ॥७ ॥
कर्माधीने वपुषि कुमतिः कल्पयन्नात्मभावं दुःखे मग्नः किमपि

सुचिरं दूयते जन्तुरेषः। सर्वं त्यक्त्वा वरवरमुने संप्रतित्वत्प्रसादाद्दिव्यं प्राप्तं तव पदयुगं देहि मे सुप्रभातम् ॥८ ॥

या या वृतिर्मनसि मम सा जायतां संस्मृतिस्ते, यो यो जल्पः स भवतु विभो नामसंकीर्तनं ते। या या चेष्टा वपुषि भगवन् साभवेद्वन्दनं ते, सर्वंभूयाद्वरवरमुने सम्यगाराधनं ते ॥९ ॥

अपगतमदमानैरन्तिमोपायनिष्ठैरधिगतपरमार्थैपरर्थकामानपेक्षैः। निखिलजनसुहद्भिर्निर्जितक्रोधलोभैर्वरवरमुनिभृत्यैरस्तु मे नित्ययोगः ॥१० ॥

इतिस्तुतिनिबन्धेन सूचितस्वमनीषितान्। भृत्यान्प्रेमार्द्रया दृष्ट्या सिञ्चन्तं चिन्तयामि तम् ॥११ ॥

अथभृत्याननुज्ञाप्य कृत्वा चेतः शुभाश्रये। शयनीयं परिष्कृत्य शयानं संस्मरामि तम् ॥१२ ॥

दिनचर्य्यामिमां दिव्यां सौम्यजामातृयोगिनः। भक्त्या नित्यमनुध्यायन्प्राप्नोति परमं पदम् ॥१३ ॥

प्रपद्ये पदपद्मानि परमप्रेमसम्पदाम्। सौम्यजामातृयोगीन्द्रचरणैकजुषां सताम् ॥१४ ॥

सम्पत्स्वरूपानुगुणैव यस्मिन् सर्वोत्तरो यत्र मनः प्रसादः। सद्भिः समं दैवतमेव देशं प्राप्यं प्रपद्ये भवदंघ्रिमूलम् ॥१५ ॥

यन्मूलमाश्वयुजि मास्यवतारमलं कान्तोपयंतृयमिनः करुणैकसिन्धोः आसीदसत्सु गणितस्य ममापि सत्तामूलं तदेव जगदभ्युदयैकमूलम् ॥१६ ॥

न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी।
कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशाः ॥१७ ॥

पुण्याम्भोजविकासाय पापावान्तक्षयाय च।
श्रीमानाविरभूद्भूमौ रामानुजदिवाकरः ॥१८ ॥

तृणीकृतविरञ्च्यादिनिरंकुशविभूतयः।
रामानुजपदाम्भोजसमाश्रयणशालिनः ॥१९ ॥

॥ इत्युत्तरदिनचर्या सम्पूर्णा ॥

## ॥श्री लक्ष्मीनारायण भगवान् की जन्मतनया॥

मकरार्के गुरो दर्शे तीर्थे चैत्ररथे वने।

सिद्धाश्रमे स्वयं जातं लक्ष्मीनारायणं भजे ॥१॥

## ॥श्री लक्ष्मीनारायण भगवान् की वन्दना॥

नृणामनादिनिजकर्मसुयन्त्रिताना-
मुद्धारणाय भववारिनिधेरगाधात्।
सिद्धाश्रमे वसति यस्तमहं सदारं
नारायणं सुरगुरुं सततं नमामि ॥१॥
शंखं प्रसारितसुखं स्वपदाश्रितानां
पद्मालया प्रियकरं प्रथितं च पद्मम्।
कौमोदकीं सुजनमोदकरीं गदाग्र्यां
चक्रं सदा दमितदानवदैव्यचक्रम् ॥३॥
संसारयन्तमतिचारुचतुर्भुजेषु
श्रीपुण्ड्रकौस्तुभधरं वनमालयाऽऽढ्यम्।
गङ्गातटे मुकुटकुण्डलमण्डितास्यं
सिद्धाश्रमेशमनिशं शरणं प्रपद्ये ॥४॥
शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥५॥
मेघश्यामं पीतकौशेयवासं श्रीवत्सांके कौस्तुभोद्भासिताङ्गम्।
पुण्योपेतं पुण्डरीकाक्षताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥६॥

## ॥श्रीरामचन्द्र भगवान् की जन्मतनया॥

मेषमासे सिते पक्षे नवम्यां च पुनर्वसौ।
मध्याह्ने कर्कटे लग्ने जातो रामः स्वयं हरिः ॥७॥

## ॥श्रीकृष्ण भगवान् की जन्मतनया॥

सिंहमासेऽसिते पक्षे रोहिण्यामष्टमीतिथौ।
चरमार्थ प्रदातारं कृष्णं वन्दे जगद्गुरुम् ॥९॥

## ॥श्रीनृसिंहस्तुति॥

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंह भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्॥१०॥

## ॥श्रीवामन भगवान् की जन्मतनया॥

सिंहमासे सिते पक्षे मध्याह्ने कश्यपान्वये।
द्वादश्यां श्रवणे जातो वामनः श्रीविवर्द्धनः॥११॥

गोदा अम्बा की जन्म तनया

कर्कटेपूर्वफाल्गुन्यां तुलसीकाननोद्भवाम्।
पाण्ड्ये विश्वम्भरां गोदां वन्दे श्रीरंगनायकीम्॥१२॥

## ॥श्रीगोदास्तुतिः॥

नीलातुङ्गस्तनगिरितटीसुप्तमुद्बोध्य कृष्णं,
पारार्थ्यं स्वं श्रुतिशतशिरः सिद्धमध्यापयन्ति।
स्वरोच्छिष्टायां स्रजि निगलितं या बलात्कृत्यभुंक्ते,
गोदा तस्यै नम इदमिदं भूय एवास्तु भूयः॥१३॥

## ॥श्री वैकुण्ठनाथ की स्तुति॥

सव्यं पादं प्रसार्याश्रितदुरितहरं दक्षिणं कुञ्चयित्वा,
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शंखचक्रे,
देवीभूषादिजुष्टोवितरतु जगतां शर्म वैकुण्ठनाथः॥१४॥

## ॥श्रीवेङ्कटेशजी की न्मतनया॥

कन्याश्रवणसंजातं शेषाचलनिवासिनम्।

सर्वेषां प्रथमाचार्यं श्रीनिवासमहं भजे ॥१५॥

## ॥श्री विजय राघव भगवान् (डेहरी) की जन्म-तनया॥

मेषमासे सितेपक्षे नवम्यां पुष्य-संयुते।
डेहरीनगरे जातं वंदे विजयराघवम् ॥१६॥

## ॥श्रीगरुड-स्तुतिः॥

श्रीविष्णुवाहं प्रणमामिभक्त्या सर्पाशनं दुःखहरं खगेशम्।
मनोहरं वायुसमानवेगं छन्दोमयं ज्ञानघनं प्रशान्तम् ॥१७॥
विष्णुपत्राय शान्ताय बलबुद्धियुताय च।
पक्षीन्द्रायातिवेगाय गरुडाय नमो नमः ॥१८॥

## ॥श्रीहनुमत्स्तुतिः॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥१९॥
उल्लंध्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लंकां नमामि तं प्राञ्जलिराञ्जनेयम् ॥२०॥

## ॥श्रीरामानुजस्वामी जी की स्तुति॥

बौद्धान्धकारपरिहारदिवाकराय श्रीवैष्णवाम्बुनिधि पूर्णनिशाकराय।
अद्वैतवादिकरियूथमृगाधिपाय तस्मै नमोस्तु सततं यतिपुङ्गवाय ॥२१॥
त्रिदण्डहस्तं सितयज्ञसूत्रं काषायवस्त्रं लसदूर्ध्वपुंड्रम।
रथांगशंखांकितबाहुमूलं रामानुजार्यं शरणं प्रपद्ये ॥२२॥

## ॥श्रीकूरेश स्वामी जी की स्तुति॥

श्रीवत्सचिह्नमिश्रेभ्यो नमउक्तिमधीमहि।
यदुक्तयस्त्रयीकण्ठे यान्ति मंगलसूत्रताम्॥२३॥

## ॥अस्मदाचार्य जन्मस्तुति॥

मेषमासेऽसितेपक्षे मित्रभे शुक्रवासरे।
सेनेशांशसमुद्भूतं विष्वक्सेनमुनिं भजे॥२४॥

श्री १००८ श्रीमद्वेदमार्ग प्रतिष्ठापनाचार्य्योभयवेदान्त प्रवर्तकाचार्यश्रीमत्परमहंसपरिव्राजकाचार्य्य सत्-सम्प्रदायाचार्य्य जगद्गुरुभगवदनन्तपादीय श्रीमद्विष्वक्सेनाचार्य्य श्रीत्रिदण्डिस्वामि-पूज्यपादानामहोरात्रचर्य्यावर्णनम्

## श्रीसेनेशगुरुचर्य्या

## ॥मङ्गलाचरणम्॥

श्रीवादिभीकरार्याणां चरणाम्बुजषट्पदम्।
श्रीविष्वक्सेनयोगीन्द्रं वन्दे दिव्यगुणास्पदम्॥१॥
समीपे जह्नुकन्यायास्तीर्थे चैत्ररथे वने।
कुटीरे सुखमासीनं वन्दे सेनेशयोगिनम्॥२॥
चर्य्या निशाह्नोस्तस्येयं भूयाद्भुवनपावनी।
प्रशस्या सर्वलोकानां जनानां मङ्गलायनी॥३॥

## ॥अथ पौर्वाह्णिकी चर्य्या॥

त्रियामायामन्ते शयनविधिमुत्सृज्य प्रयतं
समासीनं सिद्धासनवरविधानेन नृहरिम्।

स्मरन्तं ''सत्संगा'' दितियुगलपद्यं गुरुगणं
नुमः श्रीसेनेशं यतिमजपनादश्रुतिमुदम् ॥४॥

''यतीन्द्रधर्ममार्त्तण्ड'' ग्रन्थोक्तविधिना पुनः।
शुचिक्रियां विधायाथ नेतिं धौतिं समाचरन् ॥५॥

वस्तिक्रियां च कुरुते योगमार्गप्ररक्षकः।
तं सेनेशयतीशानं सदा ध्यानपथं नये ॥६॥

पुनः प्रत्युषसि स्नान्तं गंगाप्रवाहसंमुखम्।
सुशास्त्रोक्तविधानेन ध्याये सेनेशयोगिनम् ॥७॥

काषायकौपीनयुगाम्बरेण
यतं समाचम्य विधानतश्च।
न्यासं शुभांगेषु विधाय चोर्ध्व-
पुण्ड्राणि मन्त्रैर्विधिवच्च कृत्वा ॥८॥

धृत्वा त्रिदण्डञ्च कमण्लुं प्राङ्-
मुखं समास्थाय च कुक्कुटाख्ये।
शुभासने सान्ध्यविधिं चरन्तं
श्रीमद्यतीन्द्रं स्मृतिमानयामि ॥९॥

सिद्धाश्रमे गांगतटे चैलाजिनकुशोत्तरे।
पद्मासने समासीनं खेचरीमुद्रयान्वितम् ॥१०॥

आमध्याह्नं समाधिस्थंब्रह्मनारायणाभिधम्।
साक्षात्कुर्वन्तमनिशं सेवे सेनेशयोगिनम् ॥११॥

कदाचित्सज्जनैः सम्यक् प्रार्थिते संगमे यतिम्।
नुमः श्रीहरिपादाब्जे जनान् संयोक्तुमानसम् ॥१२॥

अथाधिकारसिद्ध्यर्थं तापं पुण्ड्रं विधाय च।
कृत्वा वैष्णवदासान्तं श्रीयुतं नामचोत्तमम् ॥१३॥

मूलमन्त्रादिकं दत्वा यागान्ते प्रणिपातिनः।
शिरसि प्रददन्तं श्रीशालग्रामं महाप्रभुम् ॥१४॥

अथोज्जीवनकामाय स्वीकीयौ श्रीपदाम्बुजौ।
ददन्तं संस्मराम्यद्य यतीशं कृपयान्वितम् ॥१५॥

अथ शिष्यान् याचमानान् तोष्टुकामनया पुनः।
रञ्जयित्वा स्वचरणौ रागैर्गैरिकसम्भवैः ॥१६॥

ताभ्यामथाङ्कयित्वा सद्वस्त्रं श्रीपादतीर्थकम्।
द्विर्ददानं भजाम्यद्य वादिभीकृद्यतिंगुरुम् ॥१७॥

॥ इति पौर्वाह्णिकी चर्य्या ॥

## ॥अथ माध्याह्निकी चर्य्या॥

पौर्वाह्णिकं कर्म विधाय चेत्थं
माध्याह्निकं शौचविधिं च कृत्वा।
गंगाभिषेकं प्रविधाय यज्ञ-
सूत्रोर्ध्वपुण्ड्रादिकशिखासमेत्तम् ॥१८॥
त्रिदण्डकाषायकमण्डलूनां
सन्धारकं कौक्कुटकासने च।
आस्थाय सन्ध्याविधिमाचरन्तं
श्रीयोगिवर्य्यं सततं स्मरामि ॥१९॥
ततो मध्याह्नसमये छायापुरुषदर्शनम्।
विधाय सुखामायान्तं कुटीरे श्रीमुनिं भजे ॥२०॥
अथागन्तुकभक्तेषुसाष्टांगप्रणिपातिषु।
नारायणेति संशब्द्य कुशलप्रश्नकारिणम् ॥२१॥
अथ तान्भोजयित्वा श्रीपतिभुक्तैः फलैः शुभैः।
अनुयागं स्वयं कृत्वा सुखासीनं गुरुंभजे ॥२२॥
अथापराह्णपर्यन्तं सद्ग्रन्थोपनिषद्गणान्।
व्याख्यानमधिकुर्वन्तं लेखन्या श्रीयतिं भजे ॥२३॥

॥ इति माध्याह्निकी चर्य्या ॥

## ॥अथ सायाह्निकी चर्य्या॥

अथ सायाह्नसमये गङ्गातटसमागतान्।
श्रीगीताब्रह्मसूत्रादिकथालापैःप्रतर्प्य च ॥२४॥

''हरे राम हरे राम राम राम हरे हरे।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे'' ॥२५॥
इति संकीर्तनस्यान्ते कालक्षेपसमापिनम्।
श्रीविष्वक्सेनयोगीन्द्रं सर्वदा संस्मराम्यहम् ॥२६॥

सायन्तनं शौचविधिं विधाय
गङ्गाभिषेकं सततं चरित्वा।
त्रिदण्डकाषायकमण्लूँश्च
संधार्य प्रत्यङ्मुखमासितञ्च ॥२७॥

सन्ध्याविधिं संप्रविधाय सम्यक्-
छ्रीमूलमन्त्रस्य जपे प्रसक्तम्।
स्वामित्रिदण्डिप्रवरं गुरुणां
गुरुप्रवीरं सततं स्मरामि ॥२८॥

॥ इति सायाह्निकी चर्य्या ॥

## ॥अथ रात्रिप्रथमयामचर्य्या॥

सायान्तनं विधायेत्थं कृत्यं रात्रिसमागमे।
विष्वक्सेनयतीशानं भजे योगक्रियोन्मुखम् ॥२९॥
अथ श्रीस्तोत्ररत्नाख्यं पूर्वं वरदवल्लभाम्।
पठित्वा मन्त्ररत्नेन प्राणायामगणस्य च ॥३०॥
दशद्वयं विधायाथ यामे प्रथमके निशि।
श्रीसेनेशयतीशानं भजे नित्यं पुनः पुनः ॥३१॥

॥ इति रात्रिप्रथमसामचर्य्या ॥

## ॥अथार्धरात्रचर्य्या॥

अथ यामे द्वितीये तु विंशावृत्तिं विधाय च॥
प्राणायामगणस्याथ स्थितंश्रीयमिनं भजे ॥३२॥

अथ गंगाप्रदेशेषु पय:फेननिभासु च॥
बालुकासु सुशुद्धासु पर्यङ्कंपरिकल्प्य च॥३३॥
तत्राकाशं वितानस्य स्थाने संपरिकल्प्य च।
चन्द्रं तारागणान्वापि दीपस्थाने नियोज्य च॥३४॥
भुजयोः परिबर्हञ्च कल्पयित्वा सुशायिनम्॥
शवासनेन नियतं श्रीसेनेशमुनिं भजे॥३५॥
यं देवताः सर्पगणाश्च वानराः
ऋक्षाः वृकाव्याघ्रगणाः शये सदा॥
रक्षन्ति भक्तिं परिदर्शयन्त-
स्तं निर्भयं श्रीयतिराजमीडे॥३६॥

॥ इत्यर्धरात्रचर्य्या॥

## ॥अथावशिष्टचर्य्या॥

अथ विहाय पुनः शयनक्रिया-
मसुनियामविधेर्दशकद्वयम्।
सकलयोगसुशासनशासितं
निखिलमुद्रणकर्म विधाय तम्॥३७॥
यतिवरं सुत्रिदण्डधरं भजे
विहितकर्म सुबुद्सिुभक्तिभिः॥
प्रपदनैर्गुरुभक्तिविधानकैः
सुलसितं निखिलैः शुभसद्गुणैः॥३८॥
पद्मासने समास्थाय नासिकाग्रं विलोकयन्
दक्षे हस्ते त्रिदण्डं च वामे हस्ते कमण्डलुम्॥३९॥
धारयन्नूर्ध्वपुण्ड्रेण विभ्राजितललाटकः।
काषायाम्बरसम्बीतस्तं सेनेशयतिं भजे॥४०॥
मासाष्टकं विहारेण चातुर्मास्यं ध्रुवेण च।
समाधिना नयन्तं श्रीविष्वक्सेनं मुनिं भजे॥४१॥

इतिलक्ष्मीप्रपन्नेन रचितां द्युनिशोः शुभाम्।
त्रिदण्डिस्वामिनश्चर्य्यां पठतां शं सदा भवेत्॥४२॥

## किस आसन पर बैठने से कैसी सिद्धि होती है—

(अगस्त्य संहिता १० अ.)

कुशासने भवेदायुः मोक्षः स्याद्व्याघ्रचर्मणि।
अजिने सर्वसिद्धिः स्यात् कम्बले सिद्धिरुत्तमा॥
वस्त्रासनेषु दारिद्र्यं धरण्यां शोकसम्भवः।
शिलायाञ्च भवेद्व्याधिः काष्ठे व्यर्थपरिश्रमः॥

## मालाके दानों की अष्टोत्तरशत पंचविंशतिआदिसंख्या का फल

(गौतमीयतन्त्रे अ. १५)

अष्टोत्तरशतमणिनिर्मिता या तु मालिका
राज्यं वितनुते नृणां देहान्ते मोक्षदायिनी।
मोक्षार्थी पंचविंशत्या पुत्रार्थी त्रिशतां जपेत्
चत्वारिंशन्मणिभवा अभिचाराय केवलम्॥
पंचाशन्मणिभिर्माला सर्वकर्मप्रसाधिका।
आकारादिक्षकारांतांअक्षमालेति कीर्तिता॥

॥ श्रीमते हयग्रीवाय नमः॥

## ॥श्रीविष्णुचित्तस्वामिभिरनुगृहीतम् सुमङ्गल-स्तोत्रम्॥

गुरुमुखमनधीतत्य प्राह वेदानशेषान्,
नरपतिपरिक्लृप्तं शुल्कमादातुकामः।

श्वसुरममरवन्द्यं रंगनाथस्य साक्षात्,
द्विजकुलतिलकं तं विष्णुचित्तं नमामि॥

सुमंगलं मंगलमीश्वराय ते,
सुमंगलं मंगलमच्युताय ते।
सुमंलगम् मंगलमन्तरात्मने,
सुमंगलं मंगलमब्जनाभ ते॥१॥

सुमंगलं श्रीनिलयोरुवक्षसे,
सुमंगलं पद्मभवादिसेविते।
सुमंगलं पद्मजगन्निवासिने,
सुमंगलं चाश्रितमुक्तिदायिने॥२॥

चाणूरंदर्पघ्नसुबाहुदण्डयोः,
सुमंगलं मंगलमादिपूरुषे।
बालार्ककोटिप्रतिमाय ते विभो,
चक्राय दैत्येन्द्रविनाशहेतवे॥३॥

शंखाय कोटीन्दुसमानतेजसे,
शार्ङ्गाय रत्नोज्ज्वलदिव्यरूपिणे।
खड्गाय विद्यामयविग्रहाय ते,
सुमंगलं मंगलमस्तु ते विभो॥४॥

तदावयोस्तत्त्वविशिष्टशेषिणे,
शेषित्वसम्बन्धनिबोधनाय ते।
यन्मङ्गलानां च सुमङ्गलाय ते,
पुनः पुनर्मङ्गलमस्तु सन्ततम्॥५॥

।श्रीरस्तु।

॥ श्रीवादिभीकरमहागुरवे नमः॥

## ॥श्रीवादिभीकरस्वामिनां सुप्रभातम्॥

श्रीरम्यवरयोगीन्द्र-श्रीपादाब्जमधुव्रतम्।
श्रीवादिभयकृत्सूनुं श्रीनिवासगुरुं भजे॥

श्रीवत्सवंशकलशाम्बुधिपूर्णचन्द्रं
कृत्स्नेन वेदमकुटीयुगलेन चास्मान्।
उज्जीवयाद्य तव पादसरोजभृङ्गान्
श्रीवादिभीकरगुरो तव सुप्रभातम्॥१॥
श्रीशङ्खचक्रशुभलांछनशुभ्रवस्त्र
दिव्योपवीतपरिकर्मितबाहुरम्य।
पद्माक्षसत्तुलसिकासरभव्यकण्ठा॥श्री वादि. २॥
एलालवंगपरिपूरितमज्जनाम्बु
दातुं वृषाचलपतेस्समयोऽद्य जातः।
दिव्योर्ध्वपुंड्रविलसन्मुखवारिजात॥श्री वादि. ३॥
वादान्तनिर्जितकुदृष्टिपरम्परस्य
पादान्तनम्रजगतो गुरुपुंगवस्य
वेदान्तदेशिकमणेः पदपद्मभृंग॥श्री वादि. ४॥
सद्द्राविडीफणितिवेदसमुच्चयाब्धि-
शीतांशु-रम्यवरयोगिदयैकपात्र।
सर्वातिशायिगरिमन् कदनार्थजात
दुर्वादिभीकरगुरो तव सुप्रभातम्॥५॥
मोचाफलाभ शुभवाक्सरणिप्रणीत-
स्त्वाचार्यसन्नुतिमयामृतसत्प्रणाल्या।
सञ्जीवयन् भवदवाग्नि नितान्ततप्तान्॥श्री वादि. ६॥
आषाढमासगतपुष्यमहर्क्षजात
काषायकुण्ठितयतीश्वरसक्तचित्त।
दोषाचलेन्द्र शतकोटिमहाप्रभाव॥श्री वादि. ७॥
शीतोऽद्य वाति पवनश्शतपत्रपालिः
हर्षात्समुन्मिषति कूजति ताम्रचूडः।
स्नातुं प्रजागृहि सरस्वतिनिर्मलेषु॥श्री वादि. ८॥
श्रीवेंकटाद्रिनिलयं श्रितकामधेनुं
रंगाधिपं च यदुशैलगजाद्रिनाथौ।
स्तोतुं पुराणवचसा विजहीहि निद्रां॥श्री वादि. ९॥
श्री श्रीनिवासकलितस्तुतिपात्रभूत
श्रीभाष्यतत्त्वपरिशीलनजागरूक।

श्रीविष्णुभक्तगणदास इति प्रतीत
श्रीदास्यनाममहिमन् तव सुप्रभातम् ॥१० ॥
मायिमतंगजमस्तककोटीपाटनपाटलपाणितलो यः।
श्रुत्यटवीकुहरेषु समिन्धे सः प्रतिवादिभयंकरसिंहः॥

॥ श्रीसुप्रभातस्तोत्रं समाप्तम् ॥

॥ श्रीरंगनायक्यै नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

## ॥श्रीवरवरमुनिसुप्रभातम्॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्याभजामि परवादिभयंकरार्यम्॥

रविरुदयत्यथापि न विनश्यति मे तिमिरं
विकसितपंकजं हृदयपंकजमेव न मे।
वरवरयोगिवर्यवरणीयदयैकनिधे
जय जय देव जागृहि जनेषु निधेहि धियम्॥१॥

स्वपनमिदं तव स्वमहिमानुभवैकरसं
तदपि तथाविधं तदिति जातु न वेत्ति जनः।
अचिराद् वरवरदेव तदिदं विजहि भवा-
नपरिमितं हितं त्रिजगतामनुचिंतयितुम्॥२॥

अवतरणं तदेव जगतामविवेकभृतां
विविधहितावबोधनकृते हि कृतं भवता।
तत इत एहि योगशयनान्मम नाथ जना-
नमृतमयैरपांगवलयैरभिषेचयितुम्॥३॥

शरदरविंद-वृन्दसुषुमापरिपोषाजुषा
तव नयनेन केचन परे चरणेन तथा।
मधुरंगभीरधीरचतुरैरुदितैरितरे
वरद धुरं धरन्ति भवसिंधुममुं तरितुम्॥४॥

परमनभोनिवास फणिपुंगव रंगपते-
भर्वनमिदं हिताय जगतो भवताधिगतम्।
तदपि सदैव देव नृगतिं प्रकटीकुरुषे
तदिहमहत्तवैव कुरु वैभवमुद्भिदुरम्॥५॥
त्वदभिमतप्रियस्त्वदनुवर्त्तनधन्यतमा-
दलमतिरिक्त इत्यखिललोकसुबोधमिद्।
अवनितलं त्वदीप्सितमिदं च हि तत्र वस-
न्नयमखिलस्तदैव निरुपायमुपैति पदम्॥६॥

॥ इति श्रीमद्वरवरमुनिसुप्रभातं संपूर्णम्॥

## ॥श्रीरामानुज-सुप्रभातम्॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥
जय जय यतिसार्वभौमामलस्वान्तः तुभ्यं नमः,
जय जय जनिसिन्धुमग्नात्मसन्तारकः ग्रामणीः।
जय जय भजनीय कूरेशमुख्यैः प्रसीद प्रभो,
जय जय विदुषां निधे जागृहि श्रीनिधे जागृहि॥१॥
पूर्णार्यपूर्णकरुणापरिलब्धबोध!
वैराग्यभक्तिमुखदिव्यगुणामृताब्धे!
श्रीयामुनार्यपदपंकजराजहंस!
रामानुजार्य! भगवन् तव सुप्रभातम्॥२॥
आनेतुमद्य वरदस्य गजाद्रिभर्तुः
पानीयमच्छमतिशीतमगाधकूपात्
ध्वान्तं निरस्तमरुणस्य करैस्समन्तात्।
रामानुजार्य भगवन् तव सुप्रभातम्॥३॥
श्रीरंगराजपदपंकजयोरशेष-
कैङ्कर्यमाकलयितुं सकुतुलहस्त्वम्।

उतिष्ठ नित्यकृतिमप्यखिलां च कर्तुं
रामानुचार्य! भगवन् तव सुप्रभातम् ॥४॥

श्रीभाष्यमालिखितुमात्तविशाललेख्य:
श्रीवत्सचिह्नगुरुरानतदिव्यगात्र:
वेदान्तसूत्रमपि वक्तुममुष्य सर्वम्
उत्तिष्ठ लक्ष्मणमुने! तव सुप्रभातम् ॥५॥

गद्यत्रयं निगमशेखरदीपसारं
वेदार्थसंग्रहमपि प्रथितं च नित्यम्।
गीतार्थभाष्यमपि देशिकपुंगवानाम्
दातुं प्रसीद यतिशेखर! सुप्रभातम् ॥६॥

आराधनं रचयितुं कमलासखस्य
श्रीयादवाचलपतेर्विविधोपचारै:।
पातुं च दृष्टिकमलेन नतानशेषान्
रामानुजार्य! भगवन् तव सुप्रभातम् ॥७॥

श्रीमान् स पूर्णवटुरादरत: प्रगृह्य
श्रीपादुकां यतिपते: पदयो: प्रयोक्तुम्।
द्वारि स्थितिं वितनुते प्रणतार्तिहारिन्
रामानुजार्य! भगवन्! तव सुप्रभातम् ॥८॥

काषायवस्त्रकटिसूत्रकमण्डलूँ (ला:)श्च
श्रीदन्तकाष्ठमपिदेशिकसार्वभौम:।
पाणौ निधाय निवसन्ति विशुद्धगात्रा:
रामानुजार्य भगवन् तव सुप्रभातम् ॥९॥

ब्राह्मेप्रबुद्ध्य विबुधा: स्वगुरुन् प्रणम्य
रामानुजार्य नम इतयसकृद्ब्रुवाणा:।
अष्टाक्षरं सचरमं द्वयमुच्चरन्ति
रामानुजार्य भगवन् तव सुप्रभातम् ॥१०॥

संसेव्य शप्तशतसंयमिसार्वभौमै:
सद्देशिकैस्सकलशास्त्रविदां वरिष्ठै:।
एकान्तिभि: परमभागवतैर्निषेव्य
रामानुजार्य! भगवन्! तव सुप्रभातम् ॥१॥

प्रातः पठन्ति परमद्रविडप्रपन्न-
गायत्रिमन्त्रशतमष्टशिरस्कमच्छम्।
श्रीवैष्णवास्तव पदाब्जनिविष्टभावाः
रामानुजार्य! भगवन्! तव सुप्रभातम्॥१२॥

त्वां वीक्षितुं समुपयाति वृषाचलेन्द्रः
त्वत्संप्रक्लृप्तवरशंखरथांगपाणिः।
संयोजितामुरसि मां भवतैव बिभ्रत्
रामानुजार्य! भगवन्! तव सुप्रभातम्॥१३॥

श्रीमत्कुरंगपरिपूर्णविभूस्त्वदुक्तं
श्रीभाष्यशास्त्रममलं त्वयि भक्तियुक्तः।
श्रोतुं समिच्छति यतीन्द्र! सितोर्ध्वपुण्ड्रः
तं बोधयार्थमखिलं तव सुप्रभातम्॥१४॥

त्वां बोधयन्ति गुरवः प्रथिता महान्तः
श्रीवैष्णवाश्च यमिनस्तव पादभक्ताः
एकान्तिनश्च विमलास्त्वदनन्यभावाः
तान् पालयाद्ययतिशेखर! सुप्रभातम्॥१५॥

पादाम्बुजं यतिपते! शरणं विहर्तुं
संगत्य संसरणवारिधिलङ्घनोत्काः
आयान्ति हस्तकमलाभिधृतोपचाराः
तान् पाहि ते करुणया तव सुप्रभातम्॥१६॥

रामानुजार्य! रमणीयगुणाभिराम!
रागादिदूरग! गुरो! गुरुसार्वभौम।
सत्त्वप्रधान! शरणागतवत्सल त्वत्-
पादाब्जयोरिह परत्र च किंकरः स्याम्॥१७॥

इत्यादरेण सततं शुभसुप्रभातं
ये मानवाः परिपठन्ति गुरु-प्रभातम्।
ये यान्ति विष्णुपदवीं निजजन्मनाशाद्
रामानुजार्यपदपंकजयोः प्रभावात्॥१८॥

व्यासो वा भगवान्पराशरमुनिः श्रीशौनको वाथवा।
साक्षान्नारदसंयमी शठरिपुः वागीश्वरो वाथवा॥

लोकेशः पुरुषोत्तमः फणिपतिः शेषोजनगच्छेषिणः।
इत्याख्यो जगतां हिताय समभूद्रामानुजार्यो मुनिः॥१९॥

॥ इति श्रीरामानुजसुप्रभातं॥



श्रीशठकोपमहामुनये नमः

## ॥अथ परांकुश (शठकोप) सुप्रभातम्॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

गाथासहस्रकिरणक्षपितात्मगूढ-
गाढान्धकारमरविन्दविलोचनांगम्।
श्रीवैष्णवद्विजनिषेवितमण्डलेशं
प्राप्यं भजामि वकुलाभरणाब्जबन्धुम्॥१॥

श्रीतिंतिणीतरुवरातिफणीन्द्रभोग-
पूर्णेतरोरुहरिभक्तिगृहाधिवासिन्।
हंसध्वजद्रविडवेदशिरःप्रवक्ता
श्रीमन् परांकुशमुने तव सुप्रभातम्॥२॥

नाथार्यदेशिकवरो मधुरः कविश्च
गाथामयिद्रविडवेदशिरःपरार्थान्।
श्रीमन्त्ररत्नमनुराट्परमार्थसारान्
श्रोतुं स्थितांश्छठरिपो तव सुप्रभातम्॥३॥

वाणीं मरंदशुभगां श्रुतिमार्गसौख्या-
नंदप्रदां नवनवां तव नाथ वल्लीम्।
आकर्णितुं स्वतनयप्रणुतां निशांते
प्रत्यागताद्य शठजित्तव सुप्रभातम्॥४॥

नेतुं नतार्तिहरमुत्तममादिनाथं
नीलामहीकमलपाणिसमेतमेतम्।
स्तोतुं विभूतियुगलाधिपमात्मनाथं
कामोद्य जागृहि गुरो तव सुप्रभातम्॥५॥

आपादचूडमभिवीक्षितुमादरात्त्वा-
मानंदपूर्णमनसा हरिभक्तिभुक्तिम्।
आयात्ययं यतिवरस्सह शिष्यवर्गैः
श्रीकारिनंदनगुरो तव सुप्रभातम्॥६॥

उत्तारकस्स्वपदसंश्रितदेशिकानां
पूर्णार्यपादसरसीरुहभृंगराजः।
रामानुजस्तवपदांबुजमत्र द्रष्टुं
तिष्ठत्यसौ शठरिपो तव सुप्रभातम्॥७॥

श्रीताम्रपर्ण्यभिनवोत्तमतीर्थपूर्ण-
सौवर्णकुंभसमलंकृतमस्तकोऽद्य।
आराधनार्थमभियाति गजः प्रतोल्यां
देयं परांकुशकवे तव सुप्रभातम्॥८॥

छिद्रोर्ध्वपुंड्रविलसन्निजभालपट्टाः
कण्ठावलंबतुलसीनलिनाक्षमालाः।
स्नानोत्सवं तव समीक्षितुमागतास्ते
श्रीवैष्णवा वकुलभूषण सुप्रभातम्॥९॥

गायत्ययं सुरुचिरां मधुरेण गाथा-
मारात्तदेहकविना द्विजवंशजाताः।
श्रीवैष्णवाः श्रुतिपथामृतधाररूपा-
माकर्णयस्व शठजित्तव सुप्रभातम्॥१०॥

श्रीतिंतिणीतरुवरप्रणुतार्तिदीर्घ-
शाखाशिखानिलयगीप्रतिबद्धहर्षौ।
श्रीसारसौरभ्युतस्तव पक्षिणौ द्वौ
स्तोत्रं श्रृणुष्व कुरुकेश्वर सुप्रभातम्॥११॥

नाथादिनाथ शठकोपधराधिनाथ-
बोधात्पुरेव समयः कमलाधिनाथः।

## ॥ ६ ॥

एतत्सुन्दरहेमकोकनदमाभास्वत्प्रभामासुरं
किम्वा पल्लवतल्लजालिदललानित्यैकलीलागृहम्।
अहो नन्दन रक्तचन्दनगलद्धाराप्रभवादभूतं,
चाम्बा पादसरोरुहं ददात्वानन्दथुं सन्ततम्॥१॥

शास्त्रं नाम रहस्यचिन्तनकृतामेकास्पदं सुन्दरम्,
सत्प्रज्ञानिकषायमाणमखिलं लोकोत्तरं वैभवम्।
एतत्-तत्त्वपयोनिधिमतिमतां स्वांख्यान्तांमज्जता,
मानन्दातिशयं हिवक्तुमपिभोः कोस्तीह सामर्थ्यवान्॥२॥

श्रीमद्यतीन्द्रलोकावलिलालियतलयाह्लादलावण्यीरलीलैः,
सत्काव्यालापलीलाकलकलकलिताकाकलीकूजनीत्कै
तत्तद्देशोदितोदन्तललितदुरितैर्दक्षदाक्षिण्यदीक्षैः,

सेनेशानन्दयोगीश्वरमुकुटमणिर्लालितो लीलयाऽहम्॥३॥
आम्नायादिकशास्त्रवारिधिपाथोधिमन्थाचलैः,
तत्तद्दर्शनकाव्यसञ्चयवनी सञ्चारपञ्चाननैः।
नाना दिगंतशिष्यषट्पदलसत्पादद्वयाम्भौरुहैः,

सश्रद्धैरभिनन्द्यते मुमुरहो सेनेशयोगीश्वरः॥४॥

श्रीमतांदानुदास :—

**ज.गु.रा.स्वा. लक्ष्मणाचार्य**

श्रीगजेन्द्रमोक्षदेवस्थान, हरिहरक्षेत्र (सोनपुर)



बोधक्षमागुणवतः कमलाकृतस्ते-

जागृह्यतः शठरिपो तव सुप्रभातम् ॥१२॥

अत्यादरेण भवतोदितदिव्यगाथा-

तत्त्वार्थसारमधिकर्त्तुममी प्रपन्नाः।

कांक्षन्तितेंघ्रिसरसीरुहयुग्मसेवां

दासाः परांकुशमुने तव सुप्रभातम् ॥१३॥

आषोडशाब्दमभिवीक्ष्यपरंपुषांस-

मानंदभक्तिस्सभुक्तिविवर्धमानः।

रामानुजार्यशरणः परभक्तियोग-

निद्रोसि किं तव परांकुश सुप्रभातम् ॥१४॥

अब्दे च षड्भिरनिशं दशभिस्समस्त-

कल्याणदिव्यगुणपूर्वमवर्णवाच्यम्।

स्तुत्वानुभूयपरिमीलितदिक्प्रबंधै-

र्निद्रासि किं शठरिपो तव सुप्रभातम् ॥१५॥

आयात्ययं वरवरोमुनिरष्टभिस्तै-

र्दिग्दन्तिभिः परिवृतस्तवपाद्पद्मम्।

स्तोतुं भवांतरविहंतृसुमंत्ररत्नः

श्रीमत्परांकुशगुरो तव सुप्रभातम् ॥१६॥

॥ इति श्रीपरांकुशसुप्रभातं समाप्तम् ॥

॥ श्रीमत्ते लक्ष्मीवेंकटेशाय नमः ॥

## ॥श्रीवेंकटेशसुप्रभातम्॥

।श्रीमते रामानुजाय नमः।

वेदान्तइदेशिककटाक्षविवृद्धबोधं

कान्तोपयन्तृयमिनः करुणैकपात्रम्।

वत्सान्ववायमनवद्यगुणैरुपेतं

भक्त्या भजामि परवादिभयंकरार्यम्॥

कौशल्यासुप्रजा रामपूर्वा सन्ध्या प्रवर्तते।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम्॥
उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज।
उत्तिष्ठ कमलाकान्त त्रैलोक्यं मंगलं कुरु॥

मातः समस्तजगतां मधुकैटभारेः
वक्षोविहारिणि मनोहरदिव्यरूपे।
श्रीस्वामिनि श्रितजनप्रियदानशीले
श्रीवेंकटेशदयिते तव सुप्रभातम्॥१॥

तव सुप्रभातमरविंदलोचने
भवतु प्रसन्नमुखचन्द्रमण्डले।
विधिशंकरेन्द्रवनिताभिरर्चिते
वृषशैलनाथदयिते दयानिधे॥२॥

अत्र्यादिसप्तऋषयस्समुपास्य संध्याम्
आकाशसिंधुकमलानि मनोहराणि।
आदाय पादयुगमर्चयितुं प्रपन्नाः
शेषाद्रिशेखरविभो तव सुप्रभातम्॥३॥

पञ्चाननाब्जभवषण्मुखवासवाद्याः
त्रैविक्रमादिचरितं विबुधाः स्तुवन्ति।
भाषापतिः पठति वासरशुद्धिमारात्
शेषाद्रिशेखरविभो तव सुप्रभातम्॥४॥

ईषत्प्रफुल्लसरसीरुहनारिकेल-
पूगद्रुमादिसुमनोहरपालिकानाम्।
आवाति मन्दमनिलः सह दिव्यगन्धैः
शेषाद्रिशेखर विभो तव सुप्रभातम्॥५॥

उन्मील्य नेत्रयुगमुत्तमपञ्जरस्थाः
पात्रावशिष्ठकदलीफलपायसानि।
भुक्त्वा सलीलमथ केलिशुकाः पठन्ति
शेषाद्रिशेखरविभो तव सुप्रभातम्॥६॥

तन्त्रीप्रकर्षमधुरस्वनया विपञ्च्या
गायत्यनन्तचरितं तव नारदोऽपि।
भाषासमग्रमसकृत्करचाररम्यम्।

शेषाद्रिशेखरविभो तव सुप्रभातम् ॥७॥
भृंगावली च मकरन्दरसानुविद्ध-
झंकारगीतनिनदैस्सह सेवनाय।
निर्यात्युपान्तसरसीकमलोदरेभ्य:
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥८॥
योषागणेन वरदध्नि विमथ्यमाने
घोषालयेषु दधिमन्थनतीव्रघोषा:
रोषात्कलिं विदधते ककुभश्च कुम्भा:
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥९॥
पद्मेशमित्र शतपत्रकृतालिवर्गा:
हर्तुंश्रियं कुवलयस्य निजांगलक्ष्म्या।
भेरीनिनादमिव विभ्रति तीव्रघोषं (नादं)
शेषाद्रिशेखरविभो तव सुप्रभातम् ॥१०॥
श्रीमन्नभीष्टवरदाखिललोकबन्धो
श्रीश्रीनिवास! जगदेकदर्यकसिन्धो।
श्रीदेवतागृहभुजान्तर! दिव्यमूर्ते
श्रीवेंकटाचलपते तव सुप्रभातम् ॥११॥
श्रीस्वामिपुष्करिणिकाप्लवनिर्मलांगा:
श्रेयोऽर्थिनो हरविरञ्चिसनन्दनाद्या:।
द्वारे वसन्ति वरवेत्रहतोत्तमांगा:
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१२॥
श्रीशेषशैलगरुडाचलवेंकटाद्रि-
नारायणाद्रिवृषभाद्रिवृषाद्रिमुख्याम्।
आख्यां त्वदीयवसतेरनिशं वदन्ति
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१३॥
सेवापराश्शिवसुरेशकृशानुधर्म-
रक्षोम्बुनाथपवमानधनाधिनाथा:।
बद्धाञ्जलिप्रविलसन्निजशीर्षदेशा:
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१४॥
घाटीषु ते विहगराजमृगाधिराज-
नागाधिराजगजराजहयाधिराजा:।

स्वस्वाधिकारमहिमाधिकमर्थयन्ते
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१५॥

सूर्येन्दुभौमबुधवाक्पतिकाव्यसौरि-
स्वर्भानुकेतुदिविषतपरिषत्प्रधानाः।
त्वद्दासदासचरमावधिदासदासाः
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१६॥

त्वत्पादधूलिभरितस्फुरितोत्तमांगाः
स्वर्गापवर्गनिरपेक्षनिजान्तरंगाः।
कल्पागमाकलनयाऽऽकुलतां लभन्ते
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१७॥

त्वद्गोपुराग्रशिखराणि निरीक्षमाणाः
स्वर्गापवर्गपदवीं परमां श्रयन्तः।
मर्त्या मनुष्यभुवने मतिमाश्रयन्ते
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१८॥

श्रीभूमिनायक! दयादिगुणामृताब्धे!
देवाधिदेव! जगदेकशरण्यमूर्ते।
श्रीमन्ननन्तगरुडादिभिरर्चिताङ्घ्रे!
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥१९॥

श्रीपद्मनाभ! पुरुषोत्तम! वासुदेव!
वैकुण्ठ! माधव! जनार्दन! चक्रपाणे!
श्रीवत्सचिह्नशरणागतपारिजात!
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥२०॥

कन्दर्पदर्पहरसुन्दरदिव्यमूर्ते!
कान्ताकुचाम्बुरुहकुड्मललोलदृष्टे!
कल्याणनिर्मलगुणाकर! दिव्यकीर्ते!
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥२१॥

मीनाकृते! कमठ! कोल! नृसिंह! वर्णिन्!
स्वामिन् परश्वथतपोधन! रामचन्द्र!
शेषांशराम! यदुनन्दन! कल्किरूप!
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥२२॥

एलालवंगघनसारसुगन्धितीर्थं
दिव्यं वियत्सरिति हेमघटेषु पूर्णम्।
धृत्वाऽद्य वैदिकशिखामणयः प्रहृष्टाः
तिष्ठन्ति वेंकटपते! तव सुप्रभातम् ॥२३॥

भास्वानुदेति विकचानि सरोरुहाणि
सम्पूरयन्ति निनदैः ककुभो विहंगाः
श्रीवैष्णवाः सततमर्थितमंगलास्ते
धामाश्रयन्ति तव वेंकट! सुप्रभातम् ॥२४॥

ब्रह्मादयः सुरवराः समहर्षयस्ते
सन्तस्सनन्दनमुखास्त्वथ योगिवर्याः।
धामान्तिके तव हि मंगलवस्तुहस्ताः
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥२५॥

लक्ष्मीनिवास! निरवद्यगुणैकसिन्धो!
संसारसागर समुत्तरणैकसेतो
वेदान्तवेद्यनिजवैभव! भक्तभोग्य!
श्रीवेंकटाचलपते! तव सुप्रभातम् ॥२६॥

इत्थं वृषाचलपतेरिह सुप्रभातं
ये मानवाः प्रतिदिनं पठितुं प्रवृत्ताः
तेषां प्रभातसमये स्मृतिरंगभाजां
प्रज्ञां परार्थसुलभां परमां प्रसूते ॥२७॥

॥ इति श्रीवेंकटेशसुप्रभातं समाप्तम् ॥

॥श्रीहस्तिगिरिनाथाय नमः ॥

## ॥अथ श्रीवरदराज-सुप्रभातम्॥

इह जगति मनीषा भूषणानांजनाना-
महमहमिकतायं हर्षदानात्तवेषः।
तदनुगुणतनूनां तत्तदिष्टार्थसिद्धिं
दिशतु वरदराजो देवराट् सुप्रभातम् ॥१॥

भगवति फणिराजे भक्तवात्सल्यसिंधौ
पदसरसिजसेवाप्राप्त्यवाप्ते प्रपन्नः।
तदभिमतफलार्थं तत्सरस्तीरजातो
दिशतु वरदरजो देवराट् सुप्रभातम्॥२॥

दिशि दिशि समुदीप्तैर्दिग्गजेन्द्रैरमोघै-
रहरहरभिजातैरम्बुजैरर्च्यमानः।
करिगिरिवरभागे कल्पितानेकभोगे
दिशतु वरदराजो देवराट् सुप्रभातम्॥३॥

विरचितवति भावो वेगवत्युत्तरस्यां
सुरचितपरिपाकैस्सूनृतैः सज्जनानाम्।
विलसदुभयभावो विश्रुतोदारभावो
दिशतु वरदराजो देवराट् सुप्रभातम्॥४॥

विधिसुरपतिवह्निश्रीदभूतेशरक्षो
वरुणपृषदवाहैर्वंद्यमानांघ्रिपद्मः।
तदुचितफलदायी तत्तदैवश्वर्यदायी
दिशतु वरदराजो देवराट् सुप्रभातम्॥५॥

सकलभुवनसीमासार्वभौमस्यविष्णो-
र्हयमखवरदीक्षादीक्षिते पद्मयोनौ।
भुवननयनभाग्यात् पुण्यकोट्यामुदोतो
दिशतु वरदराजो देवराट् सुप्रभातम्॥६॥

अखिलसुरसमूहैरस्मदाचार्यवर्यै-
रपिनियतविशेषैरागमोक्तैरनेकैः।
अनुदिनमतिमोदैरर्च्चितो नित्ययोगं
दिशतु वरदराजो देवराट् सुप्रभातम्॥७॥

इह जनिमुपयाता यत्पदांभोजसेवा-
जनितजननभाग्याज्जायमानप्रबोधः।
परमपुरुषपादाभ्याशमायांति सोऽयं
दिशतु वरदराजो देवराट् सुप्रभातम्॥८॥

इति विरचितमेतत् सुप्रभाताष्टकं यः
पठति सततमादौ प्रातरुत्थाय धीरः।

तदभिलषितसिद्धिं दातुमेवात्र पाणौ
दधति वरदमुद्रां देवराजं तमीडे ॥९ ॥

॥ इति श्रीवरदराजसुप्रभातम् ॥

॥ श्री रामचन्द्राय नमः ॥

## ॥श्रीरामचन्द्रसुप्रभातम् ॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम् ।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवदिभयंकरार्यम् ॥

कौशल्या-सुप्रजा राम पूर्वासंध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥१ ॥

श्रीजानकी-मुखसरोरुहचित्रभानो,
भक्तेप्सितार्थपरिपूरणकामधेनो ।
ब्रह्मादिवंद्य सरयूतटवासलोल,
साकेतनाथ जगदीश्वर सुप्रभातम् ॥२ ॥

प्राभातिकः पवन एष सरोजगंधः,
सान्द्रस्तुषारमरमन्दगतिः सुरम्यः ।
त्वां बोधयत्यखिलजीवनिवासमध्य
साकेतनाथ जगदीश्वर सुप्रभातम् ॥३ ॥

त्वय्येत हन्त कृतघोरमहापराधं,
काकं त्वयैव परिरक्षति मा कलय्य ।
अद्यापि काकनिवहोऽत्र कृपां परेषां,
काकेति निन्दति प्रभो तव सुप्रभातम् ॥४ ॥

सुग्रीवमारुतिनलादिवलीमुखेन्द्राः,
भक्ता विभीषणमुखाश्च महर्षयश्च ।
प्राभातिकं रचयितुं परमां सपर्यां,
तिष्ठन्ति देव रघुनन्दन सुप्रभातम् ॥५ ॥

आखण्डलादिसुरमण्डलवंदिताङ्घ्रे,
मार्तण्डवंशवरमौक्तिकदिव्यमूर्ते।
ब्रह्माण्डकोटिसकलेप्सितदानशौण्डे
साकेतनाथ जगदीश्वर सुप्रभातम्॥६॥
गंगा-तरंग नवदिव्यदयांग-संग,
दिव्यांगरागपरिपूरितभक्तवर्ग।
श्रृंगारसारनवमन्मथ-मंगलांग,
तुंगातरंग रघुपुंगव सुप्रभातम्॥७॥
श्रीमन् रघुद्वह कृपार्णव दीनबन्धो!
वात्सल्यधैर्यमुख सद्गुणपूर्णसिन्धो!
त्वत्पादपद्मयुग्गालार्चनतत्परान्र:,
स्वामिन् कटाक्षविषयान् तव सुप्रभातम्॥८॥
यस्संभ्रमस्तव ऋषिप्रवरावनेषु,
यस्संभ्रमस्तव परं शरणागतेषु।
तं दर्शयाद्यभगवंस्तवभक्तवर्गे,
वात्सल्यपूर्ण रघुपुंगव सुप्रभातम्॥९॥
शुभगुणगणसिन्धो दीनबन्धोऽहमन्धो,
निजवृजिनमयूखैस्त्रस्तमानस्तृषार्त:।
शरणमुपगतस्त्वां राम कारुण्यमूर्ते,
विकिर तव कटाक्षान् दिव्यपीयूषपूर्णान्॥१०॥
यो दर्भशयने दिंव्ये, पुरा सुष्वाप राघव:।
साकेतपुरमासाद्य, स एवात्र विराजते॥११॥

॥ श्रीरामसुप्रभातं सम्पूर्णम्॥

## ॥श्रीकृष्णचन्द्र-सुप्रभातम्॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिन: करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

श्रीनन्दनन्दन मनोहर राधिकेश,
गोपी-विमोहन जनप्रिय पूतनारे।
उत्तिष्ठ भक्तजनपालक दीनबन्धो,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥१॥

लीलातिचारुतर मानुषविग्रहेण,
गोपीजनस्य सुखदायक दैवतेज्य।
धूर्त्ताग्रगण्य शकटासुरभञ्जकाद्य,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥२॥

देवाधिदेवरमणीय गुणेन्दिरेश,
वेदादिवेद्य बहुचित्र-पवित्रकीर्ते।
श्रीराधिकारमणवीरविमुञ्चनिद्रां,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥३॥

श्रीदाममित्रनवीतहरालिपुञ्जे,
श्रीमन्निकुञ्जविपिनेऽपि च वेणुवादिन्।
मित्राणि ते तु यमुनामपि संव्रजन्ति,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥४॥

श्रीश्यामरूप मुरलीधरवत्सरूप,
नक्तञ्चरान्तकविभो मधुकैटभारे,
भूयोऽसुराद्यवकयोः परधामदातः
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥५॥

प्रच्छन्नदेव जनपालक शम्बरारे,
श्रीगोपिकेश धरणीधर चक्रपाणे
स्वामिन्व्रजेशसुत दिव्यगुणैकरूप,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥६॥

द्वार्यागतोऽस्ति विधिपुत्र-सुनारदोऽपि,
त्वां स्तोतुमद्य भगवन्करुणाकरन्तम्।
तस्यापि देहि निजदर्शनमद्यनाथ,
श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम्॥७॥

गायन्ति गोपवनिता मधुराक्षराणि,
गीतानि ते प्रियकराणि मनोहराणि।

स्नातुञ्च यान्तियमुनामृषयोऽधुनैव,

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥८ ॥

श्रीगोकुलस्थहरिमंदिरपूजकायै,

घन्टारवन्तु विधिना बहुकार्यंयन्ति।

गावोभवन्तमधुना तु समाह्वयन्ति

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥९ ॥

कालियमर्दन जनार्दन गोपिकानां

श्रीरासमण्डलसुखाद्भुतदानशील।

स्वामिन्विभो हि चरमार्थगुरोऽम्बुजाक्ष

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥१० ॥

कूजन्ति पक्षिनिवहायमुनातटे वै

वृन्दावने मधुवने मधुरैर्वचोभिः।

गच्छन्ति गा अनुवनं भवतः सखायः

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥११ ॥

रामानुजार्य-विधिवन्दित-पंकजांघ्रे,

गोपालकृष्ण ललितादयिते मुरारे।

संमोह्य गोपवनितावसनापहारिन्,

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥१२ ॥

चाणूरदर्पहर माधव रुक्मिणीश,

ग्राहाद्विमोचक गजस्यदयैकसिन्धो।

उत्तिष्ठ वीर करुणाकर गोकुलेश,

श्रीकृष्णचन्द्र भगवँस्तव सुप्रभातम् ॥१३ ॥



॥ श्री ॥

# ॥श्रीवेंकटेशप्रपत्तिः॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परांप्रेयसीं,
तद्वक्षः स्थ्लनित्यवासरसिकां तत्क्षान्तिसंवर्धिनीम्।
पद्मालंकृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं,
वास्तल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम्॥१॥
श्रीमन् कृपाजलनिधे कृतसर्वलोक,
सर्वज्ञ शक्त नतवत्सल सर्वशेषिन्।
स्वामिन् सुशील सुलभाश्रितपारिजात,
श्रीवेंकटेशचरणौ शरणं प्रपद्ये॥२॥
आनूपुरार्पितसुजातसुगन्धिपुष्प,
सौरम्यसौरभकरौ समसन्निवेशौ
सौम्यौ सदानुभवनेऽपि नवानुभाव्यौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥३॥
सद्योविकासिसमुदित्वरसान्द्रराग-
सौरम्यनिर्भरसरोरुहसाम्यवार्ताम्।
सौम्येषु साहसपदेषु विलेखयन्तौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये॥४॥

रेखमयध्वजसुधाकलशातपत्र,
वज्रांकुशाम्बुरुहकल्पकशंखचक्रैः।
भव्यैरलंकृततलौ परतत्त्वचिह्नै।
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥५॥

ताम्रोदरद्युतिपराजितपद्मरागौ,
बाह्यैर्महोभिरभिभूत महेन्द्रनीलौ।
उद्यन्नखांशुभिरुदस्तशशांकभासौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥६॥

सप्रेमभीतिकमलाकरपल्लवाभ्यां
संवाहनेऽपि सपदि क्लममादधानौ।
कान्तावबाङ्मनसगोचरसैकुमार्यौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥७॥

लक्ष्मीमहीतदनुरूपनिजानुभावौ
नीलादिदिव्यमहिषीकरपल्लवानाम्।
आरुण्यसंक्रमणतः किल सान्द्ररागौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥८॥

नित्यानमद्विधिशिवादिकिरीटकोटि-
प्रत्युप्तदीप्तनवरत्नमहःप्ररोहैः।
नीराजनाविधिमुदारमुपादधानौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥९॥

विष्णोःपदे परम इत्युदितप्रशंसौ,
यौ मध्य उत्स इति भोग्यतयाऽप्युपात्तौ।
भूयस्तथेति तव पाणितलप्रदिष्टौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥१०॥

पार्थाय तत्सदृशसारथिना त्वयैव,
यौ दर्शितौ स्वचरणौ शरणं व्रजेति।
भूयोऽपि मह्यमिह तौ करदर्शितौ ते,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥११॥

यन्मूर्ध्नि कालियफणे विकटाटबीषु
श्रीवेंकटाद्रि शिखरे शिरसि श्रुतिनाम्।

चित्तेऽप्यनन्य मनसां सममसहितौ ते,
श्री वेंकटेशचरणै शरणं प्रपद्ये ॥१२॥
अम्लानहृष्यदवनीतलकीर्णपुष्पौ,
श्रीवेंकटाद्रिशिखराभरणायमानौ ।
आनन्दिताखिलमनोनयनौ तवैतौ,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥१३॥
प्रायः प्रपन्नजनताप्रथमावगाह्यौ,
मातुः स्तनाविव शिशोरमृतायमानौ ।
प्राप्तौ परस्परतुलामतुलान्तरौ ते,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥१४॥
सतवोत्तरैस्सततसेव्यपदाम्बुजेन,
संसारतारकदयार्द्रदृगञ्चलेन ।
सौम्योपयन्तृमुनिना मम दर्शितौ ते,
श्रीवेङ्कटेशचरणौ शरणं प्रपद्ये ॥१५॥
श्रीश श्रिया घटिकया त्वदुपयभावे,
प्राप्ये त्वयि स्वयमुपयतया स्फुरन्त्य ।
नित्याश्रिताय निरवद्यगुणय तुभ्यं,
स्यां किंकरे वृषगिरीश न जातु मह्यम् ॥१६॥

॥ इति श्रीवेंकटेशप्रपत्तिः ॥



## ॥श्रीवेंकटेशस्तोत्रम्॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम् ।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरर्यम् ।
कमलाकुचचूचुककुंकुमतो, नियतारुणितातुलनीलतनो ।
कमलायतलोचन लोकपते, विजयीभव वेंकटशैलपते ॥१॥

सचतुर्मुखषण्मुखपञ्चमुखप्रमुखाखिलदैवतमौलिमणे।
शरणागतवत्सल सारनिधे, परिपालय मां वृषशैलपते ॥२॥
अतिवेलतया तव दुर्विषहैः, अनुवेलकृतैरपराधशतैः।
भरितं त्वरितं वृषशैलपते, परया कृपया परिपाहिहरे ॥३॥
अधिवेंकटशैलमुदारमतेः जनताभिमताधिकरदानरतात्।
परदेवतया गदितान्निगमैः, कमलादयितान्न परं कलये ॥४॥
कलवेणुरवावशगोपवधूशतकोटिवृतात्स्मरकोटिसमात्।
प्रतिवल्लविकाभिमतात्सुखदात् वसुदेवसुतान्न परं कलये ॥५॥
अभिरामगुणाकर दाशरथे जगदेकधनुर्धर धीरमते।
रघुनायक राम रमेश विभो वरदो भव देव दयाजलधे ॥६॥
अवनीतनयाकमनीयकरं रजनीकरचारुमुखाम्बुरुहम्।
रजनीचरराजतमोमिहिरं महनीयमहं रघुराममये ॥७॥
सुमुखं सुहृदं सुलभं सुखदं स्वनुजं च सुकायममोघशरम्।
अपहाय रघूद्वहमन्यमहं न कथञ्चनकञ्चन जातु भजे ॥८॥
विना वेंकटेशं न नाथो न नाथः सदा वेंकटेशं स्मरामि स्मरामि। हरे वेंकटेश प्रसीद प्रसीद प्रियं वेंकटेशं प्रयच्छ प्रयच्छ ॥९॥
अहं दूरतस्ते पदाम्भोजयुग्मप्रणामेच्छयाऽऽगत्य सेवां करोमि।
सकृत्सेवया नित्यसेवाफलंत्वं प्रयच्छप्रयच्छ प्रभो वेङ्कटेश ॥१०॥
अज्ञानिना मया दोषानशेषान्विहितान् हरे।
क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे ॥

॥ इति श्रीवेङ्कटेशस्तोत्रम् ॥

॥ श्रीमते शठकोपाय नमः ॥

## ॥अथ श्रीशठकोपप्रपत्तिः॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

श्रीश्रीशपुष्कलकृपाविषयैर्यतीन्द्र
पूर्णार्ययामुनमुखैः परमार्थविद्भिः।
पूर्वैःप्रसूनसदृशैर्विधृतौ शिरोभि
र्भव्यौ शठारिचरणौ शरणं प्रपद्ये ॥१॥

संचिंतनेप्रशमिताश्रितसर्वपापौ
प्रत्येकमुक्तिफलदाविव रागगर्भौ।
सर्वपपन्नजनमानसराजहंसौ
प्राप्यौ शठारिचरणौ शरणं प्रपद्ये ॥२॥

प्रक्षालनोदकपवित्रिततामप्रपर्ण्यां
निम्नोच्चवीचितरलः सजलाशयोऽपि।
मुक्तामयत्वमयते नतपारिजातौ
पूतौ शठारिचरणौ शरणं प्रपद्ये ॥३॥

पद्मासहायचरणस्मरणप्रमोद
सम्पत्तृणीकृतविरंचिशिवादिभोगौ।
श्रीवैष्णवैस्सततसेव्यतयानुभूतौ
प्राप्यौ शठारिचरणौ शरणं प्रपद्ये ॥४॥

प्रत्यूषपूषकिरणोन्मिपदांबुजाभौ
तत्तत्पुमर्थपरसर्वजनाभिवंद्यौ।
दुर्ल्लङ्घ्यभीमभववारिधितारपोतौ
भव्यौ शठारिचरणौ शरणं प्रपद्ये ॥५॥

अन्नादिधरकमशेषशरीरभाजां
सन्तोषकं दधिपयः प्रभृति प्रशस्तम्।
शब्दाधिभोगमपि यस्तु सः कृष्ण एव
तादृक्शठारिचरणौ शरणं प्रपद्ये ॥६॥

भूर्लोकपूर्वतनपुण्यचयैर्महात्मा
यः कारिनामकमहापुरुषात्मजोऽभूत्।
कृष्णो यथैव वसुदेवसुतः प्रसूत-
स्तादृक् शठारिचरणौ शरणं प्रपद्ये ॥७॥

सर्वाधिकार इति वैभवसंभवाय
वेदा अनादिनिधना द्रविणोक्तिरूपाः।

दिव्यप्रबन्धवपुषो यत् आविरासी
त्तादृक्शठारिचरणौ शरणं प्रपद्ये ॥८॥

श्रीतिंतिणी-सलिलदायिजनाय सर्वम्
इष्टं ददाति यदधिष्टितमूलदेशो।
यद्दर्शनं प्रणयनित्यनिवृतनिद्रा
तादृक् शठारिचरणौ शरणं प्रपद्ये ॥९॥

सत्त्वोत्तरैः सत्सेव्यपदाम्बुजेन
संसारतारकदयार्द्रदृगज्वलेन।
सौम्योपयंतृमुनिना मम दर्शितौ तौ
श्रीमच्छठारिचरणौ शरणं प्रपद्ये ॥१०॥



श्रीमते रामानुजाय नमः

## ॥अथ श्रीरामानुजप्रपत्तिः॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

श्रीकांतदिव्यपदपंकजसक्तचित्त
श्रीकारिसूनुचरणांबुजभृंगराज।
श्रीवत्सचिह्नगुरुमानसराजहंस
रामानुजार्यचरणौ शरणं प्रपद्ये ॥१॥

नाथार्ययामुनमुनीन्द्रकृपाकटाक्ष-
संलब्धबोधसकलश्रुतिमौलिवेद्य।
पूर्णार्यवर्य्यकरुणार्पितमन्त्ररत्न
रामानुजार्यचरणौ शरणं प्रपद्ये ॥२॥

श्रीरंगशेषागिरिधरणशैलनाथ
पादारविन्दपरमानुभवैकशील।

वेदान्तयुग्मविशदीकरणैकधुर्यं
रामानुजार्यचरणौ शरणं प्रपद्ये ॥३॥

दिल्लीशनीतमुपनीय तदीयकन्या
सम्मानेन पुनरर्पितयादवाद्रौ।
सम्पत्कुमारमभिषिक्तवतस्तवेमौ
रामानुजार्यचरणौ शरणं प्रपद्ये ॥४॥

तुंडीरभूमिपतिसत्कृतशंखचक्रे
शेषाचलाधिपतये किल ते वितीर्य।
लोकैकनाथगुरुभावमुपेयुषस्ते
रामानुजार्यचरणौ शरणं प्रपद्ये ॥५॥

कांचीभवः कतिपये समये न दृष्टः
कालेन दृष्टिपथमेत्य पुनर्जनानाम्।
मूको जगाद भवतः फणिराजभावं
रामानुजार्यचरणौ शरणं प्रपद्ये ॥६॥

ब्राह्यान्कुदृष्टिनिवहानपि सन्निरस्य
द्वैतं विशिष्टमखिलं श्रुतिमौलिवेद्यम्
निर्द्धार्य सात्त्विकजनाय निदर्शयन्तौ
रामानुजार्यचरणौ शरणं प्रपद्ये ॥७॥

श्रीभाष्यनामकमिंद भवदीयभाष्यं
श्रीभाष्यकार इति ते भुवने प्रथास्यात्।
इत्यादरेण किल शारदया स्तुतौ ते
रामानुजार्यचरणौ शरणं प्रपद्ये ॥८॥

भक्तिप्रपत्तिरपि वो यदि दुष्करे स्तां
रामानुजायर्यचरणौ शरणं भजध्वम्।
इत्याश्रितान्प्रति पुरा वरदोपदिष्टौ
रामानुजार्यचरणौ शरणं प्रपद्ये ॥९॥

त्वत्पादसेवनवशादधुना गुरुणां
मुक्तिः करे स्थितवती तु परा गुरुणाम्।
मूर्धन्वयादिति वदन्ति विशुद्धभावा
रामानुजार्यचरणौ शरणं प्रपद्ये ॥१०॥

आर्यैश्चतुष्कयुतसप्ततिपीठसंस्थैः
संसेविते विमलसंयमि सप्तशत्या॥
अन्यैस्तदीयनिवहैरनुभाव्यमानौ
रामानुजार्यचरणौ शरणं प्रपद्ये॥११॥

रामानुजार्य रमणीयगुणभिराम
रागदिदुर्गमगुरो यतिसार्वभौम।
सत्त्वप्रधान शरणागतवत्सलस्त्वं
रामानुजार्यचरणौ शरणं प्रपद्ये॥१२॥

॥ इति श्रीरामनुजप्रपत्तिः सम्पूर्णा॥

# ॥अथ श्रीवरवरमुनिप्रपत्तिः॥

वेदान्तदेशिककटाक्षविवृद्धबोधं
कान्तोपयन्तृयमिनः करुणैकपात्रम्।
वत्सान्ववायमनवद्यगुणैरुपेतं
भक्त्या भजामि परवादिभयंकरार्यम्॥

लोकार्यदेशिकदयागुणपात्रभूत
श्रीशैलनाथगुरुपादसरोजसङ्गात्।
प्राप्तात्मसद्गुणशमादिविशिष्ठरम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये॥१॥

श्रीलक्ष्मणार्यमुनिपदसरोजयुग्मं
श्रीमाधवांघ्रिवरलाभनिमित्तमासीत्।
यस्येहतादृगभिमानविदीश रम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये॥२॥

भट्टार्ययोगिप्रतिवादिभयंकरार्य
वानादिसंयमिमुखाश्रितपादपद्म
यस्तादृगार्य्यवरसादरपूज्यरम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये॥३॥

श्रीरङ्गदिव्यपुरमङ्गलनित्यवास
संजातहर्षगुणसंपदयागमेन।
संयुक्तविष्णुपदसूरिजनादिरम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये॥४॥

शेषोऽथवा गरुडसैन्यधुरीणको वा

श्रीनाथयोगियतिनायकयामुनो वो।
इत्यार्यसंततिविचिन्तितरूपरम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये ॥५॥

य: श्रीशठारिनिगमांतनिगूढभाव-
मत्यादरेण निजशिष्यवरै: समेत:।
व्याख्याति तादृगमितापि न सूक्तिरम्य
जामातृयोगिचरणौ शरणं प्रपद्ये ॥६॥

प्रातर्विकस्तऋजुपंकजतुल्यशोभौ
श्रीपादयुग्मरजकिञ्जलकेन युक्तो।
प्रत्यर्थिचित्तपरितापहरौ तु रम्य
जामातृयोगिचरणौ शरणं प्रपद्ये ॥७॥

पूर्वंशठारिगुरुदिव्यपुरे वसंतौ
पश्चात्प्रकृष्टगुणरङ्गकृताधिवासौ
आत्मीयसचरणपूतभुवौ तु रम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये ॥८॥

जन्मान्तरोपचितपुण्यचयै:कलाभौ
सन्मङ्गलातिशयनित्यनिदानभूतौ
सत्पुंगवादरितमसङ्गवरौ तु रम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये ॥९॥

यन्निष्ठपावनपय:कणवातलेश:
मन्निष्ठपापशततूल इवाग्निकल्प:।
तौ पुष्टशिष्टजनवित्तकृतौ तु रम्य-
जामातृयोगिचरणौ शरणं प्रपद्ये ॥१०॥

॥ इति श्रीवरवरमुनिप्रपत्ति: ॥

## ॥अथ श्रीवैकुण्ठनाथप्रपत्ति:॥

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रिसद्भक्तं विष्वक्सेनमुनिंभजे॥
वैकुण्ठनाथचरणौ मनसा स्मरामि,

वैकुण्ठनाथचरणौ वचसा गृणामि।
वैकुण्ठनाथचरणौ शिरसा नमामि,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१॥
वैकुण्ठनाथ भगवँस्तव पाद-पद्म-
ध्यानाज्जगत्कलिमलापनुदात्सदैव।
लोकः स्वकीयमभिवाञ्छितमालभेत,
तस्मात् त्वदीयचरणौ शरणं प्रपद्ये ॥२॥
सिद्धाश्रमोऽयमधुनाभवतोऽभियानात्,
सिद्धाश्रमत्वमगमत्खलु वस्तुतस्तु।
लोकास्ततोऽस्य परिसेवनतः शुभाढ्याः,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥३॥
श्रीविष्णुचितकृतमंगलसुप्रबन्धैः,
संसाधितामितसुमंगलदिव्यमूर्ते।
श्रीमच्छठारिकृतसूक्तिसुधार्चिताङ्घ्रे,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥४॥
योऽयं सुघट्टवरकः खलुरामरेखा,
नाम्नाप्रसिद्धिमित अस्यसुभाग्यकारिन्।
सेनेशसत्करयुगेन समर्चिताङ्घ्रे,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥५॥
श्रीजाह्नवी तवपदाब्जयुगं स्मरन्ती,
औदीच्यकां दिशमनुस्मरती स्वीकीयां।
श्रीजन्मभूमिमनुसंस्मरती समास्ते,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥६॥
दिव्यं तु चैत्ररथनाम वनं यदेतत्,
त्वत्पादसेवनविधान सुकर्मणात्र।
सत्तीर्थतामुपगतस्तवपादसंगात्,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥७॥
सत्संगमोऽयमथ संगमतस्त्वदीयात्,
पुण्यार्थसंगमकरः प्रविभाति लोके।
श्रीदेवदेव करुणामृतवारिराशे,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥८॥

श्रीव्याघ्रनामसरसः परमा समृद्धिः,
जात भवच्चरणसंगमतो महर्द्धे।
श्रीभूमिनायक महागुण वारिराशे,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥९ ॥

विश्रामनामकसुकुण्डवरोऽद्य लोके,
विश्रान्तिमाप यतिदेव तव प्रसादात्।
तस्माद्भवत्प्रपदयोः शरणं गतोस्मि,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१० ॥

कल्याणमंगलगुणाकर सौम्यमूर्ते,
गोदासमर्चित पदाब्जमहाविभूते।
देवेश देवगणचर्चितपादयुग्म,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥११ ॥

श्रीवैष्णवेन्द्र मुखपद्मविकासभानो,
श्रीस्वामिवर्य्यपरकालसमर्चिताङ्घ्रे।
भीभाष्यकार मुखपद्मविकास भानो,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१२ ॥

गोदासमर्पितसुभोगसुपुष्टतुष्ट
सेनेशशेषपरिपूजितदिव्यदेव।
पल्लाण्डुगानपरविष्णुसुचित्तसेव्य,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१३ ॥

श्रीमज्जयेन विजयेन च पूजिताङ्घ्रे,
नीलासमर्चितपदाब्जयुगामृताब्धे।
श्रीभूमिदिव्यकरकञ्जसमर्चिताङ्घ्रे,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१४ ॥

पूर्वाभिमुख्ययुतपंचतलो हि यस्तु,
श्रीगोपुरस्तव निवासकृते प्रदिष्टः।
तद्वासतोऽमितसुखेन युतो रमेश,
वैकुण्ठनाथचरणौ शरणं प्रपद्ये ॥१५ ॥

॥ इति श्रीवैकुण्ठनाथ प्रपत्तिः ॥

# ॥अथ श्रीवैकुण्ठनाथ-मंगलाशासनम्॥

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रिसद्भक्तं विष्वक्सेनमुनिंभजे॥
श्रीवैकुण्ठविरक्ताय तीर्थे चैत्ररथे वने।
श्रीभूमिसहितायास्तु वैकुण्ठेशाय मङ्गलं॥१॥
श्रीमद्वैकुण्ठनाथाय नीलाभीष्टप्रदायिने।
अनन्तांगविमानाय मंगलं दिव्यतेजसे॥२॥
मेघवर्णाय, देवाय, तडिदम्बरधारिणे।
गोदाप्राणसुनाथाय वैकुण्ठेशा" मंगलम्॥३॥
सिद्धाश्रमनिवासाय शंखचक्रसुधारिणे।
वैकुण्ठेशाय सौम्याय मंगलं परमान्मने॥४॥
श्रियः कान्ताय भव्याय पाञ्चरात्रप्रभाषिणे।
द्राविडाम्नायवन्द्याय वैकुण्ठेशाय मंगलम्॥५॥
सर्वलोकशरण्याय कल्याणगुणसिन्धवे।
वेदगर्भपुरीस्थाय वैकुण्ठेन्द्राय मंगलम्॥६॥
सुस्मितायसुभालाय जाह्नवीतटवासिने।
विष्वक्सेनसुपूज्याय वैकुण्ठेशाय मंगलम्॥७॥
कुम्भे पुष्यर्क्षजाताय प्रमोदानन्दवर्षिणे।
खगराजाधिराजाय वैकुण्ठेशाय मंगलम्॥८॥
वैकुण्ठगद्यचिन्त्याय दिव्यसूरिस्तुताय हि।
पार्षदसहितायास्तु वैकुण्ठेशाय मंगलम्॥९॥
यतिमानसहंसायषट्चक्राशुप्रभेदिने।
वैकुण्ठेशाय शुद्धाय मंगलं श्रीमहौजसे॥१०॥
पल्लाण्डुगीतसक्ताय दोषदूराय विष्णवे।
गणाधिराजराजय वैकुण्ठेशाय मंगलम्॥११॥
रम्यजामातृसेव्याय परमार्थप्रदायिने।
वैकुण्ठेशाय पूर्णाय मंगलं सत्यसिन्धवे॥१२॥
जाह्नवीजलसिक्ताय शालग्रामसुधारिणे।
वेदवेद्याय नित्याय वैकुण्ठेशाय मंगलम्॥१३॥

प्रपन्नपारिजाताय सत्याय शुभमूर्तये।
वैकुण्ठेशाय दिव्याय नित्यश्रीर्नित्यमंगलम् ॥१४॥
विष्णुभक्तसुगम्याय सव्यपादप्रसारिणे।
वैकुण्ठेशाय देवाय नित्यश्रीर्नित्यमंगलम् ॥१५॥

॥ इति श्रीवैकुण्ठनाथ मंगलाशासनम् ॥

## ॥अथ श्रीवैकुण्ठनाथ-सुप्रभातम्॥

अनन्ताचार्यकृपया वेदान्तद्वयपारगम्।
रामकृष्णाङ्घ्रिसद्भक्तं विष्वक्सेनमुनिंभजे॥
कौशल्या–सुप्रजा राम पूर्वा संध्या प्रवर्तते।
उत्तिष्ठ नरशर्दूल कर्तव्यं दैवमाह्निकम् ॥१॥
उतिष्ठोतिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज।
उतिष्ठ कमलाकान्त त्रैलोक्यंमंगलं कुरु ॥२॥
श्रीविष्णुचित्तपरकालसुयोगिवर्य्यौ,
आशासने तव सुमंगलकस्य लग्नौ।
सिद्धाश्रमं विपुलसिद्धिकरं गृणन्तौ,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥३॥
वैकुण्ठनाथ वरवल्लिकया समेता,
सभ्राजते विपुलवृद्धिसमृद्धिपूर्णा।
श्रीदेवनाथ गणनाथ सुसौम्यमूर्ते,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥४॥
पक्षीन्द्र एष तव पादयुगे प्रपन्नः,
गीत्वा तवामृतमयानि सुनामकानि।
उद्धर्षमेष वहते करुणामृताब्धे,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥५॥
श्रीभूमिनायकसुशील सुसौम्यमूर्ते,
गोदासमर्पितसुभोगसुपुष्टतुष्ट।
श्रीमज्जयेन विजयेन च पूजिताङ्घ्रे
वैकुण्ठनाथा भगवँस्तव सुप्रभातम् ॥६॥

श्रीभाष्यकार-मुखपद्म-विकासभानो,
सेनेश-शेष-करकञ्ज-सुपूजिताङ्घ्रे।
श्रीभट्टनाथ-शठकोप-समर्चिताङ्घ्रे।
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥७॥

श्रीवैष्णवाब्ज-सुविकासन-दिव्यभानो,
श्रीमद्-वरेन्द्रमुनि-पोषणकर्म-विज्ञ।
यज्ञैश्च सेवितमहागुणदिव्यमूर्ते,
वैकुण्ठनाथ-भगवँस्तव सुप्रभातम् ॥८॥

श्रीगोपुरेषुतलकेसुनिविष्टदेव,
पक्षीन्द्रदिव्यकरकञ्जसमर्चिताङ्घ्रे।
दिव्यैश्च देवगणकैः परिपूजितेश,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥९॥

सेनेशयोगिवरदत्तमहासुभोग,
लक्ष्मीसमर्चितपदाब्जदयामृताब्धे।
पुष्ट्या भुवा च परिपूजितपादयुग्म,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१०॥

श्रीशारदाकृतसुशब्दगणैः सुवन्द्य,
सिद्धाश्रमस्थितमुनीन्द्रगणैः सुपूज्य।
देवाधिदेव मुनिवर्य्यगणैः सुसेव्य,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥११॥

आचार्यवैभवसमर्चितपादयुग्म,
श्रीभक्तवर्य्यपरिपूजितदिव्यमूर्ते।
दिव्यैः प्रबन्धवरकैश्च परिष्टुतार्य्य,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१२॥

भानुश्च याति उदयं महनीय देव,
तारागणश्च विलयं भजतेऽयि देव।
कोलाहलं प्रकुरुते दधिमन्थघोषः
वैकुण्ठनाथभगवँस्तव सुप्रभातम् ॥१३॥

श्री पञ्चकालवरपूजनतुष्टदेव,
भक्तार्पितेन विविधेन पदार्थकेन।

सम्यक्सुपूजित महागुण देवदेव
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१४॥

पुण्यैः प्रकीर्तित सुनाम कलिप्रणाशिन्,
भक्तिप्रपत्तिवरमार्गसुबोधकारिन्।
देवाधिदेव उररीकृतदिव्यमूर्ते,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१५॥

भक्ता अमी तव मुखाब्जमहासुशोभां,
द्रष्टुं प्रबोधसमये मिलितो दयाब्धे।
उत्तिष्ठतां च वितराद्य दयामृताब्धे,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१६॥

श्रीमत्सुदर्शनसमर्चितपादयुग्म,
सेनेशशेषपरिभावितदिव्यमूर्ते।
लक्ष्मीप्रपन्नपरिचर्चितपादयुग्म,
वैकुण्ठनाथ भगवँस्तव सुप्रभातम् ॥१७॥

॥ इति श्रीवैकुण्ठनाथ सुप्रभातम् ॥



## ॥ अस्मदाचार्यस्तुतिः ॥

काषायं यज्ञसूत्रं शुचिवपुषि तथा चोर्ध्वपुण्ड्रं च भाले।
यस्यास्ते दक्षहस्ते कलिकुमतिगिरीन्द्रन्द्रवज्रंत्रिदण्डम् ॥
संसाराग्निप्रशान्त्यै भृतजलममलं दारुपात्रं पवित्रम्।
श्रीविष्वक्सेनसूरेः पदकमलयुगं श्रेयसे संश्रयामि ॥४०॥

